भानुदत्त-विरचिता

# ।। रसमञ्जरी ।।

इन्द्रदत्तकृतया टीकया संवलिता

•

सम्पादकः
डॉ० रमेशचन्द्र होता

गङ्गानाथझा-केन्द्रीय-संस्कृत-विद्यापीठम्
चन्द्रशेखर-आज़ाद उद्यानम्
प्रयागः

भानुदत्त-विरचिता

# ॥ रसमञ्जरी ॥

इन्द्रदत्तकृतया टीकया संवलिता

●

सम्पादकः

डॉ० रमेशचन्द्र होता

गङ्गानाथझा-केन्द्रीय-संस्कृत-विद्यापीठम्

चन्द्रशेखर-आज़ाद उद्यानम्

प्रयागः

**प्रकाशक -**

*प्राचार्य*
**गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठ**
चन्द्रशेखर आजाद पार्क
इलाहाबाद-२





**प्रकाशन वर्ष** - २००२

**प्रकाशित प्रतियाँ - ५००**

**मूल्य -**

**मुद्रक -**
दुर्गा इण्टर प्राइज़ेज
मोतीलाल नेहरु रोड, इलाहाबाद

राष्ट्रिय-संस्कृत-संस्थानम्
(केन्द्रीय-शिक्षामन्त्रालयस्याङ्गभूतम्)
देहली

●

गङ्गानाथ झा-केन्द्रीय-संस्कृत-विद्यापीठ-ग्रन्थमाला

प्रधानसम्पादकः
डॉ० गयाचरण त्रिपाठी

पञ्चपञ्चाशत्तमं प्रसूनम्

❖

भानुदत्त-विरचिता

# ।। रसमञ्जरी ।।

इन्द्रदत्तकृतया टीकया संवलिता

सम्पादकः
डॉ० रमेशचन्द्र होता

गङ्गानाथ झा-केन्द्रीय-संस्कृत-विद्यापीठम्
प्रयागः
२००२

**RASHTRIYA SANSKRIT SANSTHAN**
(Under the auspices of the Ministry of H.R.D.)
**New Delhi**

**Ganganatha Jha Kendriya Sanskrit Vidyapitha**

**TEXT SERIES**

*Chief Editor*
**Prof. G.C. Tripathi**
Principal

Vol. No. 55

# RASMANJARI

**By**
**BHANUDATTA**
*With Commentary*
*by*
**INDRADATTA**

•

*Edited by*
**Dr. Ramesh Chandra Hota**
Research Assistant

•

**Ganganatha Jha Kendriya Sanskrit Vidyapeetha**
*Chandrashekhar Azad Park*
**Allahabad-211 002**
2002

श्रीः

# समर्पणम्

मैथिलयोः सावित्री-
हरिहरयोर्झेत्युपाधिभूषितयोः।
करकमलेष्वर्पयति
व्याख्यायुतभानुदत्तकृतिम्।।

विनीतः
होता रमेशचन्द्रः

# Preface

We are happy to publish the commentary of Indradatta on the Rasamanjari of Bhanudatta, a work on Nayaka Nayikabheda which has tremendously influenced the Indian literature and Art. Indradatta was Maithila like the poet whose work he has chosen to comment upon and by all standards he appears to be a profound scholar of grammar, literature and other disciplines. He seems to have lived in the early part of the 19th century.

I hope that the commentary embellished with a long introduction by Dr. Hota shall go a long way to reveal the mysteries of the Rasamanjari to the interested readers.

Gaya Charan Tripathi

# पुरोवाक्

भगवतः परमेश्वरस्यानुग्रहेण महाकवेर्भानुदत्तस्य कृतिर्मौलिकी रसमञ्जरी शाब्दिकशिरोमणिना इन्द्रदत्तेन प्रणीतया इदानीं यावदप्रकाशितया रसमञ्जरीवृन्ताभिधानया टीकया सनाथिता प्रकाश्यत इति मोमुद्यते नश्चेतः। अस्याः प्रकाशनेन न केवलं व्युत्पित्सवोऽन्तेवासिन उपकृता भवेयुरपि तु सहृदया रसमञ्जरीरसिका अपीति विश्वसिमि। किञ्च स्वीयां कृतिं प्रकाशितां वीक्ष्य प्रसन्नो व्याख्याता इन्द्रदत्तः दिवङ्गतोऽपि दिव्येन निजाशीर्वचसा सभाजयिष्यति सम्पादकप्रकाशकाविति मदीया धारणा।

रसमञ्जरीकृतः भानुदत्तस्य परिचयः मन्ये न स्यात् प्रयत्नप्रतिपादनीयः। आभारतं कृतीनामस्याध्ययनाध्यापनयोर्विद्यते प्रचारः। किञ्च प्रसिद्धदार्शनिकस्य शंकरमिश्रस्यानुजपौत्रोऽयं भानुदत्तः सुरभिटीकाकृता कविशेखरबदरीनाथझाशर्मणा भूमिकायां वैशद्येन वंशावलीवैदुष्ययोः परिचयेन सह विद्यत एव विवृतः। दरभंगास्थ मिथिलासंस्कृतविद्यापीठतः प्रकाशिता सम्पूर्णापि कृतिर्भानुदत्तस्य प्रसिद्ध्यति प्रसिद्धपाण्डित्येन डा० त्रिलोकनाथ झा शर्मणा ससमालोचनं सम्पादिता।

अस्याः व्याख्याता गर्गगोत्रीयोऽयमिन्द्रदत्तः व्याकरणालङ्कारशास्त्रयोः लब्दप्रतिष्ठो धीधनोः मन्ये मध्यदेशीयः। मिथिलायां गर्गगोत्रीयस्यानुपलब्धेः। व्याख्याया अस्याः वैशिष्ट्यं सुनिपुणं प्रदर्शितं भूमिकायां विदुषा सम्पादकेनेति तत एवावगमनीयम्। किञ्चेदानीं स्वयमेव व्याख्येयं सुवासा उशतीरिव प्रदर्शयत्यात्मगुणान् नापेक्षतेऽत्र साक्ष्यम्।

इदमिहावसेयम्। 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति सर्वजनानुभववेद्यं विद्यते। अतएव प्रयोजनं किमपि मनसि निधायैव व्याख्यातुं प्रवर्तते व्याख्याकृत्। प्रथमं प्रयोजनं तावत् प्रस्तुतस्य विषयस्यावबोधार्थं व्युत्पत्त्याधायकेन व्याकरणकोशादिसमुपकरणबलेन व्याख्याकृत् तथा प्रयतते यथा विषयः प्रतिपाद्यः पाठकस्य हृदयङ्गमो भवत्येव। येन साधारणजिज्ञासुरपि स्वल्पश्रमेणानायासेन समवगच्छति प्रतिपाद्यम्। कदाचित् आत्मसंप्रदायस्य संरक्षणसंवर्धनमपि भवति प्रयोजनं द्वितीयम्। व्याख्यायां गुणाधानं तु पदच्छेदेन पदार्थोक्त्या विग्रहेण वाक्ययोजनया पूर्वापरसंबन्धाभिधानेन च सञ्जायते। अतएव व्याख्यायाः यावदुक्तोपपन्नतावश्यकी भवत्यर्थात् यावतीषु उक्तिषु विषय उपपद्यते तावत्योऽत्र

उक्तय: अपेक्ष्यन्ते । अतएव नापेक्षते विस्तरोक्तिर्नवा समासोक्तिरेव ।

**विस्तरोक्तं मतिं हन्ति समासोक्तं न गृह्यते ।**
**समासविस्तरौ हित्वा वक्तव्यं यद् विवक्षितम् ॥**

इत्यभिलपति विष्णुधर्मोत्तरपुराणम् । अस्य च परिपालनं विहितमिहेन्द्रदत्तेन मतिमतेति सन्तोषस्थानम् ।

रसमञ्जर्या: सतीष्वपि षोडशाधिकासु व्याख्यासु विद्यमानायामप्यस्याम-ध्ययनाध्यापनपरम्परायां विंशतितमशताब्दभवेन कविशेखरबदरीनाथझाशर्मणा प्रणीता सुरभिटीकैव प्रथमतः धीधनानां शिष्याणां च मध्ये सुलभा ग्रन्थावबोधनपरा चासीत् । पश्चात् अलीगढ़विश्वविद्यालयस्य संस्कृतविभागेऽध्यक्षचरेण विपश्चिदपश्चिमेन दिवङ्गतेन रामसुरेशत्रिपाठिना रसमञ्जर्या: पुरातन्यष्टीका: द्वित्रा: सम्पाद्य प्रकाशिता: याश्च समादृताश्चक्षुष्मद्भिर्मतिमद्भिः । अन्या बह्वयष्टीका: अस्या रसमञ्जर्या: अधुनापि प्रकाशकमुखापेक्षितां भजन्ते । यासां परिचयोऽत्र भूमिकायां विद्यते ।

डा० रमेशचन्द्र होता शुभोदयोऽस्माकं प्रीतिपात्रं स्वकीयबुद्धिकौशलेन परिश्रमेण च सुसमपादयत् ग्रन्थमिममिति शुभाशीराशिभि: सभाजयामि वर्धापयामि च तं सर्वथा । अग्रेऽपि भविष्यति काले एवमेव सारस्वतमनुष्ठानं कुर्वन्नयं समुन्नतिं लभतामिति भगवान् विश्वेश्वर: प्रार्थ्यते ।

इलाहाबाद                                                                 विदुषामाश्रव:

15/2/02                                                                 **किशोरनाथझा**

# कार्त्तज्ञ्य-ज्ञापनम्

*दारुब्रह्म जगन्नाथं लोककल्याणकारकम् ।*
*नीलाचले पुरीधाम्नि विद्यमानं नमाम्यहम् ॥*

अस्माकं परमाराध्यानां महाप्रभूणां जगन्नाथस्वामिनां महत्या कृपया सम्पूर्णतां नीतेऽस्मिन् कार्यसम्भारे परमप्रमोदं विन्दामहे ।

सर्वप्रथमहं स्वदीक्षागुरुवर्याणामुत्कलीयमूर्धन्यविदुषां व्याकरणसाहित्यायुर्वेदादिशास्त्रविदां प्रयागवासिनां पण्डितश्रीचन्द्रशेखरदाशमहाभागानां मातृस्वरूपाणां श्रीमतीउमादेवीगुरुपत्नीनां च चरणकमलेषु सादरं प्रणामाञ्जलिं समर्पयामि ।

अस्मिन् कार्ये येन केनापि प्रकारेण मह्यं साहाय्यमदायि ते सर्वे मम नितरां प्रणम्याः धन्यवादार्हाश्च । तेषु प्राथम्येन ममाचार्याणां गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठस्य प्राचार्याणांडॉ०गयाचरणत्रिपाठिमहाभागानांपुरतः करशिरः संयोगानुकूलक्रिययाऽभिवादनं व्याहृत्य स्वकार्त्तज्ञ्यंज्ञापयामि ।

तथैव परमश्रद्धेयाः कविमूर्धन्याः डॉ० जगन्नाथ पाठकाः भू०पू० प्राचार्याः श्रीरणवीरकेन्द्रीयसंस्कृतविद्यापीठ श्रीगङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठयोः, ममास्मिन् कार्ये सहानुभूतिपूर्वकं स्वगम्भीरानुभवद्वारा यदन्वगृह्णन् तदर्थमहं तेभ्यः सप्रणति भृशं कृतज्ञतां समर्पये ।

ऋषिकल्पो वैयाकरणशिरोमणिः पं० श्रीतारिणीशझा महाभागो मम गुरुरेव। अतोऽस्मिन् कार्ये योगदानाय तस्मै शतशः प्रणामान् विहाय किमधिकं कार्त्तज्ञ्यं समर्पयेयमिति मे वाङ्मनोऽतीतम् ।

उत्कलसाहित्यसमाजस्य सभापतये शिवशर्मासंस्कृतमहाविद्यालयस्य प्राचार्याय महामनीषिणे नैष्ठिकब्रह्मचारिणे राष्ट्रपतिसम्मानेन सभाजिताय डॉ० जयत्श्याम ब्रह्मचारिणे महाभागाय सप्रश्रयं प्रणतिं निवेद्यकार्येऽस्मिन् साहाय्यप्रदानाय आभारं प्रकटयामि ।

विद्यापीठस्य वरिष्ठप्रवाचकं नैकभाषाविदं विद्वन्मूर्धन्यं डॉ० किशोरनाथ झा महाभागं प्रति पुस्तकस्यास्य सम्पादने सत्परामर्शदानायाहं हृदा कार्तज्ञ्यं प्रकटयामि ।

अतःपरं कार्येस्मिन् नैकशः सहयोगप्रदानाय साहित्यविभागप्रमुख डॉ० गोपराजुरामा पं० जीवेश्वर झा परियोजनाधिकारी, डॉ० शैलकुमारी मिश्र प्रवाचिका, गङ्गानाथझा-केन्द्रीयसंस्कृतविद्यापीठस्य, ममगुरुवरः डॉ० शिवकुमार चतुर्वेदी प्रवाचकः व्याकरणविभाग लखनऊ, केन्द्रीयसंस्कृतविद्यापीठस्य एतान् सर्वान् प्रति अहम् सहस्रशः आभारान् धन्यवादाँश्च यथायोग्यं समर्पये ।

विदुषां वंशवदः

**रमेशचन्द्र होता**

# अनुक्रमणिका

## उपक्रमः –

एकेन तत्त्ववेत्त्रा मनीषिणा अभाणि–कस्यचित् ग्रन्थस्याध्ययनात् प्राक् तद्ग्रन्थकारस्याध्ययनमवश्यं कर्तव्यम्। तदनुसारेण रसमञ्जरीकारस्य कविराजभानुदत्तस्य सम्बन्धेऽध्ययनेन वयं जानीमो यदयं भानुदत्तमिश्रमहोदयः मिथिलायां मधुवनीमण्डलान्तर्गत सरिसवग्रामवास्तव्य आसीत्। षोडशशताब्यामयं जन्म लेभे इति 'संस्कृतसाहित्यस्येतिहासग्रन्थे[१]' श्रीरामचन्द्रमिश्रेण प्रत्यपादि। स्वस्य पितुर्नाम म०म० गणपतिमिश्र इति स्वकीये **रसपारिजाते** भानुदत्तोऽभिधत्ते।

**यथा गणपतेः काव्यं काव्यं भानुकवेस्तथा**
**उभयोः संगमः श्लाघ्यः शर्कराक्षीरयोरिव॥**

अलंकारतिलके भानुदत्तस्य गर्वोक्तिर्विद्यते, यथा–

**दण्डीयति यतो दण्डी वामनीयति वामनः।**
**तदलंकारतिलकं धीराः कुर्वन्तु भूषणम्॥**

तथ्यमिदं स्व० प्रख्यातमनीषी रामावतारशर्मा समर्थयति–'मिथिलाया भानुदत्तमिश्रः प्रख्यातं पण्डितराजं (जगन्नाथम्) अतिशेते। अयं मिश्रमहोदयः मधुवनी-मण्डलान्तर्गते सरिसवाभिधे ग्रामे निवसति स्म' इति।

साहित्यशास्त्रीयग्रन्थेषु मिश्रमहोदयेन रचिता रसमञ्जरी, रसतरङ्गिणी, अलङ्कारतिलकम्, काव्यदीपिका, शृङ्गारदीपिका, चित्रचन्द्रिका रसमञ्जरी व्याख्या च–एते ग्रन्थाः प्राप्यन्ते। गीतगौरीशं नाम गीतिकाव्यञ्च लभ्यते। सप्तदशशतके संगृहीतेषु सुभाषितग्रन्थेषु भानुदत्तमिश्रस्य सार्धशतश्लोकाः प्राप्यन्ते। तेन तदीयकाव्यलोकप्रियता प्रतीता भवति।

भानुदत्तस्य रसतरङ्गिणी रसनिरूपणापरा रचना विद्यते। अस्यामष्टौ तरङ्गा विद्यन्ते। प्रथमतरङ्गे स्थायिभावानां निरूपणं, द्वितीये विभावानां निरूपणं, तृतीये अनुभावानां निरूपणं, चतुर्थे सात्त्विकभावनिरूपणं पञ्चमे व्यभिचारिभावनिरूपणं, षष्ठे सप्तमे च रसनिरूपणं विद्यते। अष्टमस्तरङ्गः प्रकीर्णसंज्ञकोऽस्ति, यत्र दृष्टिभेदाः, रसानां जन्यजनकभावाः रसयोः वैरभावादयश्च प्रतिपादिताः। अस्मिन् ग्रन्थे भानुदत्तेन प्रतिपादितं यत् जृम्भा च नवमः सात्त्विको भाव इति प्रतिभाति।

---

१- प्रकाशनस्थानम्–चौखम्बाविद्याभवनम्, वाराणसी

एवमेवात्र करुणरसप्रकरणे भानुदत्तेन रसरत्नदीपिकाया एकं पद्यमुदाहृतम्, यस्य सम्बन्धे जनश्रुतिरस्ति यदयं रसरत्नदीपिकाग्रन्थः भानुदत्तस्य पित्रा निर्मितो वर्तते।

रसमञ्जरी नायकनायिकाभेदविषयको ग्रन्थोऽस्ति। अत्र समग्राणि लक्षणानि उदाहरणानि ग्रन्थकृता निर्मितानि सन्ति। पद्यानि ललितानि विद्यन्ते। रसमञ्जरी साहित्यशास्त्रमधीयानानां लोकप्रियतां प्राप्ता। भारतवर्षस्य विभिन्नेषु भागेषु रचिताः द्वादशसंख्याका रसमञ्जरीटीका विद्यन्ते। भानुदत्तस्य रसमञ्जरीमनुसृत्य पश्चाद्वर्तिभिः साहित्यशास्त्रिभिः नायकनायिकाविषयका बहवो ग्रन्थाः प्रणीताः। रसमञ्जर्यां भानुदत्तेन प्रवत्स्यत्पतिकाभिधः एको नवीनो नायिकाभेद उद्भावितः।

तल्लक्षणन्तु तेनैव कृतम्, यथा—यस्याः पतिरग्रिमक्षणे देशान्तरं यास्यत्येव सा प्रवत्स्यत्पतिका। इयं नवमी नायिका भवितुमर्हति। अस्या अन्तर्भावः अष्टविधनायिकासु न सम्भवतीत्यपि तेनैव प्रदर्शितम्।

भानुदत्तः महाविद्वान्, महाकविस्तथा महाभागवतोऽप्यासीत् प्रमाणस्वरूपं केवलं निम्नलिखितं श्लोकद्वयं दृश्यताम्—

**आत्मीयं चरणं दधाति पुरतो निम्नोन्नतायां भुवि,**
**स्वीयेनैव करेण कर्षति तरोः पुष्पं श्रमाशङ्कया।**
**तल्पे किञ्च मृगत्वचाविरचिते निद्राति भागैर्निजै-**
**रन्तः प्रेमभरालसां प्रियतमामङ्के दधानो हरः॥**[१]

कविरनेन श्लोकेन वस्तुनिर्देशरूपं मङ्गलाचरणं करोति। अत्र अर्धनारीश्वरशिवस्य वर्णनं विद्यते। वृक्षात् पुष्पत्रोटनाय शिवः उच्चावचभूमौ स्वकीयं चरणं न तु शिवायाः अग्रे दधाति तथा स्वीयेनैव हस्तेन पुष्पं कर्षति। किञ्च हृदये प्रेमभरेण अलसां प्रियतमां गौरीं स्वाङ्गं धारयन् हरः मृगचर्मनिर्मितायां शय्यायां निजैः भागैः स्वपिति।

अपूर्वभावभरोऽयं श्लोकः। एतद्रचनायां कवित्वशक्तिर्ज्ञानशक्तिश्च उभे दृश्येते—

**क्षोणीपर्यटनं श्रमाय विहितं वादाय विद्यार्जिता**
**मानध्वंसनहेतवे परिचितास्ते ते धराधीश्वराः।**
**विश्लेषाय सरोजसुन्दरदृशामास्ये कृता दृष्टयः**
**कुज्ञानेन मया प्रयागनगरे नाराधि नारायणः॥**[२]

---

१- रसमञ्जरी १/१
२- रसतरङ्गिणी ५/५

अस्मिन् श्लोके महाकविना "तृणादपि सुनीचेन" इति भगवद्भक्तानुशासनेन अहंकारत्यागपूर्वकं भगवदाराधना विधेयेति शिष्टवाक्यं परिपालयता स्वस्य लोकवेदयोर्महज्ज्ञानं कुज्ञानं मन्यमानेन महान् पश्चात्तापः प्रकटितः।

नाट्यशास्त्रस्य फलतः काव्यशास्त्रस्य च विषयवस्तुत्वेन शृङ्गाररसावलम्बनभूतस्य नायकनायिकाभेदस्य वर्णनं भरतस्य नाट्यशास्त्र-ग्रन्थादारभ्य श्रीभानुदत्तरचितरसमञ्जरीं यावत् क्रमशः सुपुष्पितमिव सुफलितमिव दृश्यते। आदौ बीजम् लघु भवति तदेव पुष्पितं फलितं सत् महत् भवति–एवमेव नायकनायिकाभेदमधिकृत्य नाट्यशास्त्रीयायाश्चर्चाया विवेचनं कृतवन्तः। परन्तु स्वविस्तारसूक्ष्मनिरीक्षणादिकं रसमञ्जरीस्थं वर्णनं किमपि परिपूर्णमिव दृश्यते। अस्मद् दृष्ट्याअग्निपुराण-दशरूपक-सरस्वतीकण्ठाभरण-साहित्यदर्पणादिकान् सर्वान् ग्रन्थान् रसमञ्जरी अतिशेते।

अस्मिन् ग्रन्थे नायिकायाः नायकस्य वा आलम्बनविभावस्य सहयोगित्वेन नर्मसचिवानाम् दूती चेटीप्रभृतीनाम् वर्णनं ग्रन्थान्तरापेक्षया विशदं वर्तते। अस्या रसमञ्जर्या विशेषः शृङ्गाररसः रसराजतां भजतीतिकथनं सर्वथा समीचीनम्। रसतत्त्वम् अलौकिकानन्दयुक्तं वर्तते। तच्च रसतत्त्वं रसज्ञस्य आस्वादयितुः यथा शृङ्गाररचनाभिः प्रस्फुटति उद्भवति वा न तथा शृङ्गारेतररसरचनासु इत्यपि सहृदयानामनुभवः। अतएव तस्य परमसाधनीभूतसामग्रीणां समावेशेनैव हेतुना अयं ग्रन्थः सहृदयानां रसास्वादने सफल इति अनुभूयते मया।

मानवमात्रस्य चित्तस्था रतिः, प्रकृत्या प्राप्तः भावविशेषः सुप्तोऽर्धसुप्त इव प्रतीयमानो वर्तते। तस्य भावविशेषस्य साधनविशेषैः प्रकाशनं उद्भूतिर्वा भवति यः रसपदवाच्यः (कथंचित्) आनन्दमात्रशरीरः जायते तस्य च साधनानि अनेकानि विभावानुभावप्रभृतीनि। तेषु नायकः नायिका च महत्त्वशालिसाधनम् इति न तिरोहितं रसज्ञानाम्।

अयमस्ति आक्षेपः केषांचित् सदाचारपक्षधराणां यत् अस्याः मञ्जर्याः विषयवस्तुनः सटीकेन अध्ययनेन अध्येतुः मनः बौद्धिकमेव स्यादपरं तत्तत्कामवर्धकस्थितिसाहचर्यं लभते येन कामासक्ततया तस्य आचरणमपि संवलितं भवेत्। एवं कामातिशयबुद्धिजनकत्वात् ईदृशम् (पुनः सटीकमपि) रसमञ्जरीविषयवस्तुवर्णनम् न सर्वथा श्लाघ्यम् अभीष्टं पुरुषार्थं वा। अयं आक्षेपकर्तॄणाम् पूर्वः पक्षः।

काव्यशास्त्रिणः एतस्य शृङ्गारोपादानस्य रसमञ्जरीस्थस्य विषयवस्तुनः

उपयोगं मानवस्य रतिस्थायिभावप्रबोधे मन्वते। अनेन विषयवस्तुना नाटकादिदर्शनमुखेन काव्यवाचनमुखेन च मानवनिष्ठः शाश्वतः रतिरूपः स्थायिभावः सहजतया रसपदवीम् प्रापयितुं शक्यते। इत्थं परिणामतया रसनिष्पत्तौ जातायाम् तत्प्राक् मनः स्थितेः कामवर्धकसामग्रीप्रभावः व्यर्थः सञ्जायते यथा नावा जलराशिमुत्तीर्णस्य स्वलक्ष्यं प्राप्तस्य मनुष्यस्य कृते पारङ्गमयित्री नौर्व्यर्था भवति। इत्थं साधने अकृतादराः रसानुभूत्यैव स्वार्थं सफलं मन्यमानाः आलङ्कारिकाः पूर्वोक्तस्य आक्षेपस्य निःसारतां साधयन्ति। एतद्दृष्ट्या कामवर्धकसामग्रीसत्त्वात् अनादरणीयताया सम्भावनाऽपि रसमञ्जरीविषये स्थातुं न शक्नोति।

एतत्पूर्वग्रन्थेषु शृङ्गाररसालम्बनविभावत्वेन नायकनायिकाभेदः अनुषङ्गतया गौणतया वा अतिसूक्ष्मरूपेण वर्णितः। परन्तु मञ्जर्यामस्याम् स एव अर्थः मुख्यतया सामस्त्येन च निरूपितः। इत्यस्ति नाट्यशास्त्रात् अग्निपुराणादिभ्यश्च अस्या रचनायाः प्राशस्त्यम्। भानुदत्तश्च अस्य प्राशस्त्यस्य कारणेन अत्र प्रकरणे प्रधानः आचार्यः इति वक्तुं शक्यते। यतो हि अस्याः मञ्जर्याः प्राक् निबद्धेषु अलङ्कारशास्त्रीयग्रन्थेषु आलम्बनविभावैः नायकनायिकाप्रभेदैः सह तत्सम्बद्धनर्मसचिवादीनाम् अतिसंक्षेपेण वर्णनं दृश्यते–तेषामेव वर्णनम्। अस्यां मञ्जर्याम् विशदं विस्तृतं च वर्णनं वर्तते इति कृत्वैव मया एतत्प्रकरणे अस्या मञ्जर्याः अयं विशेषः सिद्धान्तो नोल्लिखितः।

शृङ्गाररसस्य स्थायिभावो रतिः यावत् न प्रबुद्धः उद्रिक्तो वा भवति तावत् शृङ्गाररसास्वादनम् दुर्लभम् इति वस्तुतत्त्वम्। स च रतिः इत्याख्यः स्थायिभावः नायकसम्बद्धः नायिकायाम् नायिकासम्बद्धश्च नायके स्वस्थानं लभते अर्थात् नायकनायिके रतिभावसम्पन्ने एव आस्वादयितुः चित्ते शृङ्गाराविर्भावसमर्थे भवतः नान्यथा। इति दृष्ट्या रत्यालम्बनभूतयोः नायकनायिकयोः महत्त्वं स्थिरीकर्तुमिति समीक्ष्यैव श्रीमान् भानुदत्तः, अलङ्कारशास्त्रीयाणाम् अन्येषां तत्त्वानाम् वर्णने विमुखः उक्तस्य आलम्बनविभावस्य विस्तारे कृतयत्नः सफलश्च दृश्यते।

शृङ्गारस्यैव साकल्येन आस्वाद्यत्वात् स मुख्यो रसः अथवा स एव रसः इति भोजदेवस्य सम्मतिः प्राणिमात्रव्यापिनी रतिः रागारुणे भावः आलङ्कारिकैः मानवमात्रं यावत् संबद्ध इति मत्वैव सहृदयमानवस्य चित्ते रतिरित्याख्यो भावः व्यक्तः सन् रसरूपतामेति नान्यप्राणिषु इयं व्यवस्था। कृता वर्तते। तेषां कृते तु रतिभावः सुतराम् ऐन्द्रियसुखोत्पादकः। अतएव लौकिकः कदाचित् हानिप्रदश्च न तथा रसराजतां प्राप्तस्य रतिभावस्य विषये स्थितिः इति तु ध्येयमेव। महाकवयः

मानवेषु न स्त्रीषु पुरुषेषु च दृश्यमानाम् इमां वृत्तिम् रसत्वेन परिणतामेव सफलां मन्यन्ते। तेषां कृते नान्यथा इयं वृत्तिः अभीष्टा। अन्यथा तु सा वृत्तिः भोगसाधनत्वेन हेयैव इति सर्वेषाम् दृष्टिः इत्यस्माकं विश्वासः। सामाजिकधार्मिकरीतीरनुसृत्य जायमानः स्त्रीपुंसोः रतिनिबन्धनः विवाहसम्बन्धः एव नास्ति दाम्पत्यस्य मुख्यं लक्ष्यं प्रत्युत तज्जन्यः सम्भोगात्मक आनन्दः एव मुख्यं लक्ष्यम्। आलङ्कारिका आचार्या उपर्युक्तस्थितौ सामाजिकस्थित्याकलनेन स्त्रीपुरुषमधिकृत्य नियमविशेषान् प्रतिष्ठाप्य साहित्यिकदृष्ट्या तेषाम् स्त्रीपुरुषाणाम् लोकास्वाद्यं वर्गीकरणं प्रस्तुतवन्तः। आचार्यभरतस्य नाट्यशास्त्रे स्त्रीपुरुषयोः विभिन्नवर्गस्थित्या तयोः वर्गीकरणव्यवस्था सुतरां सुरुचिपूर्णा वर्तते। अयमाचार्यः इमां सामग्रीं नाट्योपकारिकां मत्वैव तथा अकरोत् परन्तु परवर्तिनः आचार्याः सर्वांशतया शृङ्गारसद्भाववति क्षेत्रे इमां सामग्रीं स्वस्ववाङ्मयैः व्यापिकां कृतवन्तः अर्थात् अलङ्कारशास्त्रस्य अन्यविषयेभ्यः भावालङ्कारध्वन्यादिभ्यः पृथक् स्थिताम् इमाम् सामग्रीं मुख्यविषयत्वेन उल्लिलेख यस्याः परिणतिः पूर्णावस्था च तत्र (रसमञ्जर्याम्) दृश्यते।

एवं भरताद्याचार्याणां सूक्ष्मेक्षिकावशात् स्त्रीपुरुषौ व्यावहारिकस्त्रीपुरुषयोः स्वरूपं त्यक्त्वा नायकनायिकात्वेन सहृदयानां बुद्धौ प्रतिष्ठितौ, अथ च लोकेऽनुभूयमाना स्त्रीपुरुषगता रागात्मिका वृत्तिः कामभावो वा लौकिकं स्वरूपं विहाय किमपि अलौकिकम् शृङ्गारादिरसानुगुणं स्वरूपं प्राप्नोत्। इमे आचार्याः स्त्रीपुंसोः प्रणयसम्बन्धस्य आन्तरं (मनोभावनिरूपणात्मकम्) बाह्यम् (शरीरचेष्टादिरूपं च) स्वरूपं मनसि निधाय तस्य तस्य वैविध्यं दर्शयन्तः वर्गीकरणं प्रस्तुतवन्तः। शृङ्गारस्य उभौ अपि पक्षौ संयोगवियोगस्वरूपौ उपर्युक्तस्य वर्गीकरणस्य बाह्याधारौ प्रतिष्ठितौ जातौ आन्तरदृष्ट्या तु अस्य वर्गीकरणस्य मुख्य आधारः उभयगतः प्रकृतिसिद्धः रतिभाव एव प्रतिष्ठितो जातः। कविप्रतिभा, रतिमूलकसकलव्यावहारिकप्रकारान् वर्गीकृत्य काव्येषु चमत्कारभाराक्रान्तस्वरूपतया तान् अलौकिकस्वभावान् प्रादर्शयत्। लोके स्वीकार्याः रतिमूलकाः सर्वाः स्थितयः काव्यजगति लोकातीताः अलौकिकाः लोकोत्तरा वा संजाताः। अस्यां स्थितौ स्त्रीपुंसोः प्रणयसंबद्धसकलभावानाम् कार्याणां च स्वरूपम् रसाभिव्यञ्जिका अभिव्यञ्जना काव्यस्य प्राणवती जीवन्ती संपत्तिः समपद्यत। अनयैव दृष्ट्या (न तु लौकिकप्रणयदृष्ट्या) नायकनायिकाभेदपर्यालोचनं सर्वथा महत्त्वशालि सञ्जातम्। काव्यशास्त्रकामशास्त्रयोः कुशलः समन्वयः अपि नायकनायिकाभेदस्य महत्त्वाधायकं द्वितीयम् साधनं सम्पन्नम्। वस्तुतः अयं समन्वयः नाट्यशास्त्रे

भरतोपज्ञः सन्नेव प्रवर्तमानः दृश्यते।

आधुनिकयुगस्य शुद्धा उदात्ता च साहित्यिकदृष्टिः (कर्ता) उपर्युक्तानि शास्त्रीयविवेचनानि (भरतादिभिः प्रोक्तानि) (कर्म) शृंगारिकताविलसितात्मकप्रवृत्तीनां जागरितं प्रत्यक्षं वा रूपं मत्वा तिरस्कृतानि अव्यावहारिकाणि च मनुते तथापि शुद्धरूपेण वाङ्मयविषयीभूतः नायकनायिकाभेदः, ग्राह्यम् ऐकान्तिकं साहित्यं सत् अपि सः (भेदः) स्वपूर्णतायाम् अप्रतिमः अतएव विदुषां स्पृहणीयः वर्तते। इमानि विवेचनानि न केवलं स्त्रीपुंसोः प्रकृतिव्यवहारयोः परिवर्तनकारयित्रीं सूक्ष्मां दृष्टिम् एव उत्पादयन्ति। प्रत्युत तानि (विवेचनानि) जीवनस्य परमलक्ष्यभूतम् अलौकिकम् आनन्दम् अथ च तदानन्दस्य आभ्यन्तराः अनुभूतीः च उद्भाव्य, कतिपयक्षणान् अभिव्याप्येन केनापि दिव्येन आलोकेन सहृदयम् चमत्कुर्वन्ति। एतद्दृष्ट्या वयम् साहित्यरसज्ञाः अद्यापि तानि विवेचनानि हेयानि इति मन्तुं न उद्यताः। विश्वसाहित्ये सर्वत्रापि न्यूनाधिकरूपेण नायकनायिकयोः विभिन्नानां प्रवृत्तीनां शारीरसौन्दर्यस्य च वर्णनम् अस्त्येव। संस्कृतसाहित्यं तु अस्मिन् विषये परम्परापालनपूर्वकं विशिष्टतया आश्चर्यकारिण्या च सामग्र्या समन्वितं दृश्यते। एवं च नायकनायिकाभेदमाध्यमेन तयोः विभिन्न-प्रकृति-विभिन्नावस्था-गुण-मानसिकस्थितीरनुरुध्य (तयोः नायकनायिकयोः) मनोवैज्ञानिकविश्लेषणमपि सुविशदतया संस्कृतवाङ्मये उपलभ्यते इत्यस्ति भाषान्तरसाहित्यात् संस्कृतस्थस्य अस्य विषयस्य विशेषः। एतच्च संस्कृतभाषास्थं वर्णनम् अद्यापि मनोरञ्जकं ज्ञानवर्द्धकं च वस्तु संपन्नं वर्तते।

रसमञ्जरीस्थवर्ण्यविषयस्य पूर्वकालिकस्वरूपं विकासक्रमरूपेण ज्ञातुं क्रमशः भरतव्यासवात्स्यायनशृङ्गारतिलककाव्यालङ्कारधनिकधनञ्जयप्रभृतिभिस्तथा शृङ्गारप्रकाशभावप्रकाशसाहित्यदर्पणप्रमुखग्रन्थेषु सुविशदतया वर्णितम् एतद्वाङ्मयम् अवश्यम् अध्येतव्यम्। वस्तुतः वर्ण्यविषयप्रकाशनदृष्ट्या एष्वेवग्रन्थेषु शृङ्गारविभावे नायकनायिकाभेदे वर्णिते सति, रसमञ्जरीस्थवर्णनम् स्वतन्त्रतया पूर्णतया च महत्त्वशालि न वर्तते तथापि क्वचित् स्वतन्त्रसिद्धान्तप्रकाशनेन इयं मञ्जरी विशिष्टा महत्त्वशालिनी च इति वक्तुं शक्यते। यथा धनञ्जयेन दशरूपककर्त्रा मुग्धा-मध्या-प्रगल्भा नायिकानां कतिपये उपभेदाः प्रदर्शिताः। ते उपभेदाः एतच्छास्त्रस्य लक्ष्यसिद्धिदृष्ट्या सर्वथा व्यर्थाः इति सिद्धान्तस्य प्रकाशनम् रसमञ्जरीकारः अकरोत्–इत्यस्ति तस्या वैशिष्ट्यम्। अस्या मञ्जर्याः परवर्तिनि संस्कृतवाङ्मये एतद्विषयस्य प्रतिपादकसामग्रीपरम्परा न दृश्यते। अतएव इयमेव

एतद्विषयस्य प्रतिपादयित्री, उक्तग्रन्थानाम् आशयम् एकत्र स्थापयन्ती, रसस्रोतसां स्ववर्ण्यविषयाणां प्रवाहयित्री अतएव आलङ्कारिकैः सहृदयैश्च अभिनन्दनीया वर्तते। इत्यपि अस्या महत्त्वशालित्वे हेतुः।

अस्मिन् प्रसङ्गे 'शृङ्गारमञ्जरी' ग्रन्थस्य चर्चा अत्यन्ता प्रासङ्गिकी। इयं मञ्जरी बह्वंशेषु स्वतन्त्रा मौलिकी रचना इति वक्तुं शक्यते। अस्यां च रसमञ्जरीस्थस्य सिद्धान्तानां सुवहुशः समीक्षा तत्रापि रसमञ्जरीस्थस्य वर्गीकरणस्य लक्षणानां च प्रतिपदम् आलोचना कृता वर्तते। इयं मञ्जरी वडेशाह अकबर रचयिता प्रथमतः इयं ग्रन्थकर्त्रा तेलुगु भाषायां रचिता ततश्च संस्कृतमयी तच्छाया एव, इयम् अचिरादेव प्रकाशिता शृङ्गारमञ्जरी वर्तते। अस्याः प्रकाशनेन इदं सिद्ध्यति यत्रसमञ्जरी एव नास्ति एतद्विषयिका अन्तिमा रचना अपितु तत्सदृशी तत्प्रतिद्वन्द्विनी च शृङ्गारमञ्जरी एव अद्य यावत् एतद्विषयिणी अन्तिमा रचना विद्यते। श्रुतिपारिजातकुसुमस्पर्धाकरी मञ्जरी इति स्वकृतेन पद्यात्मकग्रन्थान्तश्लोकेन कविना श्रीभानुना वाग्देव्या वर्णनं कृतम् येन इयं रसमञ्जरी पद्यात्मिका इति निश्चितं भवति तथैव च उपलभ्यते अपि अस्यां स्थितान् मञ्जरीस्थान् श्रीभानुदत्तकृतान् विविधच्छन्दोऽलङ्कारपूर्णान् श्लोकान् उदाहरणरूपान् एतद्विषयकलक्षणसमन्वितान् दृष्ट्वा अनेके टीकाकृतः नायिकाभेदविशेषचर्चया एषां पद्यानाम् व्याख्यानमकार्षुः।

अर्धनारीश्वरं स्वोपास्यं देवं नत्वा, एवं च नमस्कारात्मकं मङ्गलं विधाय, श्रीमान् भानुदत्तः, स्वरचनाया हेतुं दर्शयन् कथयति यत्–इह जगति सहृदयकाव्यरसिकानां चेतो भृङ्गःपुष्परसमिव काव्यरसाय स्पृहयति। तेषां स्पृहां सफलां कर्तुम् अस्याः मम रसमञ्जर्याः प्रकाशनं क्रियते। ग्रन्थस्य द्वितीयया कारिकया अयमर्थः ध्वन्यते। एवं रसाविर्भावसाधनप्रकाशने रसान्तरापेक्षया सर्वैरपि अभिनन्दितस्य शृङ्गाररसस्य साधने अत्यन्तम् उपयोगितया स्थितस्य आलम्बनविभावस्य वर्णनम् सुतरां प्रसङ्गप्राप्तं वर्तते। शृङ्गारस्य स्थायी भावः रतिः नायकचेतोनिष्ठः नायिकाचेतोनिष्ठश्च वर्तते। अतएव उभयोः भेदप्रभेदान् उदाहरणत्वेन उल्लिख्य तत्रत्यम् (रतिभावस्य शृङ्गारत्वेन) रसत्वेन परिणामम् प्रकाश्य ग्रन्थोऽयम् काव्यरसिकशिरोमणीन् रसिकान् सहृदयान् प्रसादयति इत्यस्ति अस्य लक्ष्यसिद्धिः। अस्मिन् प्रकरणे प्रदर्शितानि उदाहरणानि आलम्बने रतिस्थायिभावं तद्द्वारा सहृदयचेतसि च रसावस्थां प्रापयितुं सुसमर्थानि न तथा ग्रन्थान्तरस्थैः उदाहरणैः रसाविर्भावः इति एतद्ग्रन्थालोचकैः अस्माभिश्च प्रत्यक्षीकृतं

वर्तते। आलम्बनविभावत्वेन नायकेन सह साम्येऽपि नायिकाया रूपस्य आलम्बनस्य श्रेष्ठतां स्वीकृत्य ग्रन्थकारः प्रथमं नायिकानां भेदं हस्तेकरोति। नायिकाश्च उपाधिभेदेन अनेकाः। अतः तासां वर्गीकरणेन तत्तन्नायिकापरिचयः सुतरां सरलः। अतएव तासां वर्गीकरणे कृतयत्नः ग्रन्थकृत् प्रथमं ताः त्रिषु रूपेषु स्थापयति–काश्चन स्वीयाः, अन्याश्च परकीयाः, इतराश्च सामान्याः इति वर्गत्रये एव सर्वाअपि नायिकाः समावेशं लभन्ते इत्यस्ति ग्रन्थकृदाशयः। आसां लक्षणानि अव्याप्यादिदोषपरिमार्जनपूर्वकम् (चेष्टादिवर्णनमपि च) संक्षिप्ततया ग्रन्थकर्त्रावबोधितानि। तत्र प्रथमं स्वीयायाः (प्रथमवर्गे स्थितायाः) उदाहरणे स्वोक्तचेष्टानुगमनं कौशलातिशयेन स्वोदाहरणे विन्यस्य अस्य वर्गस्य पुनरपि त्रिषु भेदेषु विभागं करोति ग्रन्थकृत्। प्रथमोभेदः 'मुग्धा' इति द्वितीयो मध्याइति तृतीयोभेदः प्रगल्भा इति। अनन्तरं च ग्रन्थकृत् 'स्वीया' भेदस्य 'मुग्धा' नायिकायाः लक्षणम् वयः कृतं भेदद्वयम् व्यापारनिबन्धनात् भेदान् लज्जादीन् वर्णयति। ततश्च मुग्धायाः असाधारणगुणान् चेष्टाः च सर्वथा श्लाघ्येन उदाहरणेन प्रस्तुवन् ग्रन्थकारः व्यापारनिबन्धनभेदानां लज्जादीनाम् एवं सकलमध्याभेदानां सर्वथा उपपन्नैः उदाहरणैः परिचयं ददाति।

अतःपरम् लज्जामदनोभयविशिष्टां मध्यां परिभाष्य अस्याः धार्ये धैर्यमूलकवक्रोक्तिः अधैर्यमूलिका परुषवाक् च एतेन रूपेण प्रकाशिते। अवस्थान्तरं प्राप्ता इयमेव मध्या, अतिविश्रब्धनवोढानाम्नींस्थितिं धारयति, यस्या व्यवस्थितम् उदाहरणं ग्रन्थकर्त्रा निर्दिष्टं वर्तते। यस्य अनुशीलनेन अयं मध्याभेदः सुस्पष्टं सहृदयहृदयेषु नरीनर्ति।

अथ प्रगल्भनायिकापरिचयावसरे ग्रन्थकारः अतिव्याप्तिदोषरहितं लक्षणं प्रदर्शयति। पूर्ववत् अस्या अपि चेष्टाः वर्णयन् ग्रन्थकृत् अनेकशः नायिकाः लक्षणचेष्टोदाहरणैः बोधयति। ततश्च नायिकालम्बनविभावस्य कृते अत्यावश्यकसामग्रीम्, सखीलक्षणम्, भेदान्, उदाहरणानि तासां कर्माणि एवंप्रभृतीनि तथ्यानि प्रकाश्य दूतीभेदगुणनिर्देशं करोति ग्रन्थकारः। ततो नायकभेदनिरूपणेनैव सह तत्सहायपीठमर्दविटचेटविदूषकलक्षणानि अपि सुविशदीकृतानि वर्तन्ते। ततः सात्त्विकभावानाम् स्तम्भस्वेदादीनां लक्षणमुदाहरणं च प्रदर्श्य ग्रन्थकारः स्वग्रन्थस्य मुख्यतमलक्ष्यस्वरूपश्रृङ्गाररसस्य लक्षणम् भेदोपभेदसहितं स्थापयन् ग्रन्थप्रचाराभ्यर्थनया सह कविपरिचयं ददाति। एवमेव रसमञ्जर्यां वागूदेव्याः सौन्दर्ये सौकुमार्ये आसेचनकत्वमुदूघोष्य ग्रन्थकारः विरमति।

एवम् उक्तप्रकारेण सरसायाः विशिष्टकाव्यप्रतिभासंपन्नायाः अस्या रसमञ्जर्याः भावबोधसमर्थानां विविधटीकानाम् अभ्युदयोऽपि स्वाभाविक एव।

यद्यप्यस्मिन् प्रबन्धे तासां तासां सकलानाम् रसमञ्जरीटीकानाम् समावेशः कठिनः तथापि पण्डितवर्यस्य श्रीमतः इन्द्रदत्तस्य टीका साभिप्रायं ससमीक्षम् अत्र विवेचिता वर्तते। एतद् विवेचनम् अस्य प्रबन्धस्य मुख्यं लक्ष्यम् इति उद्घोष्य अग्रेसरामः।

सर्वान्ते स्वमञ्जरीं वाग्देव्याः श्रवणस्थितपारिजातकुसुमस्य च प्रतिद्वन्द्विनीम् उद्भाव्य ग्रन्थावसानं करोति।

**टीकाया महत्त्वम्–**

रसमञ्जरीवृन्तम् रसमञ्जरीवृत्तं वा रचयन् इन्द्रदत्तः प्रथमं रसमञ्जरीस्थमंगलाचरणगतविशेषणानाम् स्वार्थमतदर्थप्राप्तम् महता कौशलेन व्यनक्ति। प्रत्येकविशेषणप्रदानसमये ग्रन्थकर्तुः क आशयः इति सहृदयधिया रसानुभवरूपलोकोत्तरवस्तुसंपन्नधीमता इन्द्रदत्तेन उत्तरित एव वर्तते यत्रस्थितम् पाण्डित्यं दर्शनीयमेव इत्यस्मदनुभवः।

तन्मतेन ग्रन्थकृता रचितं मंगलम् वस्तुस्वरूपम् हरस्य नतिरूपम् वर्तते। आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखम् इति त्रिविधमंगलस्य शास्त्रे प्रसिद्धत्वात् इदं मंगलम् तन्मध्ये स्थितम् वस्तुरूपम् इति इन्द्रदत्तस्य आशयः प्रतीयते।

आत्मीयं चरणं दधाति–इत्यत्र प्रत्येकं विशेषणम् मञ्जरीकारस्य शृङ्गाररस वर्णनकौशले प्रौढिं ध्वनयितुं समर्थम् इति कदाचित् इदमेव लक्ष्यं मनसिकृत्य भानुदत्तः एवंविधानि समर्थानि विशेषेणपदानि हरवर्णने प्रयुक्तवान् इति इन्द्रदत्तेन महत्या सूक्ष्मेक्षिकया व्याख्यातं तच्च इन्द्रदत्तस्य सूक्ष्मदृष्टित्वसाधनाय पर्याप्तम् इति मन्ये। इयमुक्ता प्रौढिः एतच्छ्लोकस्थप्रत्येकविशेषणसाध्या इति वक्ष्यमाण-व्याख्यानेनैव सहृदयानां व्यक्तं भवति–यथा दक्षिणेन चरणेन निम्नोन्नतायां भुवि स्वदक्षिणपादस्य स्थापनेन, एवमेव स्वेन दक्षिणेन हस्तेन, पुष्पं त्रोटयन् हरः पार्वत्याः श्रमस्य अपनोदनेन किञ्च मृगत्वचा निर्मिते आस्तरणे कठिनास्तरणे स्वभागमेव अर्पयन् प्रतिकूलशय्यायाः देव्याः पुरस्तकरणेन स्वस्मिन् प्रेमभराक्रान्तायाः प्रियतमायाः धारणेन इति। इत्थम् स्वस्य भानुदत्तस्य शृङ्गाररसवर्णनकौशले प्रौढिः इति ध्वनिरेव मञ्जरीकृतः लक्ष्यम् इति इन्द्रदत्तः समीक्षितवान्–अस्य मङ्गलश्लोकस्य व्याख्यायाम्।

**इन्द्रदत्तस्य व्याकरणशास्त्रज्ञाने वैदुष्यम्–**

विद्वतकुल इत्यस्मिन्श्लोके भानुदत्तः एषा रसमञ्जरी प्रकाश्यते इत्युक्तवान्। सिद्धं वस्तु दर्शयित्वैव संकेतेन तदर्थे एतत्शब्दस्य प्रयोगः दृश्यते–प्रकाशनात् पूर्वम् सा मञ्जरी असिद्धा एव। अतः तदर्थे एषा शब्दस्य प्रयोगः न सुरुचिकरः नापि प्रशस्यश्च अयमारोपः अत्र संभवति इति विचार्यैव ननु, इन्द्रदत्तः अस्पष्टतया वैयाकरणसंमतबुद्धिस्थपदार्थसत्तास्वीकारेण अस्य संभावितस्य आरोपस्य समाधानं कृतवान्। सः अस्मिन् प्रसंगे कथयति–शृंगारादीनामाधारभूता तन्नामिका रचना प्रकाश्यते अन्तर्गतापि (क्वचित् बुद्धिस्थापि) बहिः क्रियते।

अनया भाषया इन्द्रदत्तः अभिप्रैति यत् बहिः अवर्तमानोऽपि बुद्ध्युपादानकः बौद्धः पदार्थः अपि शाब्दबोधविषयो भवति। अतएव एष वन्ध्यासुतो याति इत्यादौ वन्ध्यासुतस्य बहिः असत्त्वेऽपि बौद्धपदार्थरूपेण सत्त्वात् तस्य याति इति क्रियया अन्वयः अनुभूयते तत्र शाब्दबोध एव न भवति इति यथावसरं खण्डयिष्यते। अत्र तस्य अप्रासंगिकता वर्तते। एवं च बौद्धपदार्थसत्तां स्वीकृत्य अत्र एष इति इन्द्रदत्तेन सूचितं येन अस्य शास्त्रान्तरज्ञानम् सकलशास्त्र सोपानरूपव्याकरणशास्त्रज्ञानं च स्फुटीभवति।

भानुदत्तेन नवसु अपि रसेषु शृङ्गारस्य अभ्यर्हितत्वं स्वीकृतम्। अन्यरसापेक्षया किं विलक्षण्यम् अस्मिन् शृङ्गारे इति समीक्षाया नायं प्रसंगः। अतः इच्छन्नपि अहम् ततो विरम्य अग्रेसरामि। एवं च भानुदत्तानुसारेण अभ्यर्हितशृङ्गारस्य आलम्बनविभावभूताया नायिकाया निरूपणं प्रथमं गृहीतम् इति दृष्ट्या इन्द्रदत्तः श्रेष्ठमनोवैज्ञानिकपण्डितधिया इत्थं समीक्षते। शृङ्गारस्य स्थायिभावो रतिः नायके नायिकायाम् च उभयत्रापि तिष्ठति तथापि नायिकानिष्ठा रतिः यथा आञ्जस्येन लघुतया अव्यभिचरितसाफल्येन शृङ्गारस्य आविर्भावं करोति न तथा नायकनिष्ठा इति इयं दृष्टिः इन्द्रदत्तस्य। उभयोरपि चित्तज्ञः इन्द्रदत्तः कुशलमनोवैज्ञानिकवत् नायिकास्थकुशलतरविभावस्य प्रकाशकः। स्वनिर्णयम् समर्थयितुम् पूर्वरक्ताभवेन्नारी इत्यादि वचनानि च स्वटीकायाम् स्थापयति।

**इन्द्रदत्तस्य कालः–**

षोडशशताब्द्यामुत्पन्नेन मैथिलभूसुरेण महाकविना भानुदत्तमिश्रेण निर्मितस्य 'रसमञ्जरी' नाम्नोग्रन्थरत्नस्य अनेकाष्टीकाः समपद्यन्त, परं तासु इन्द्रदत्तोपाध्यायेन विरचिता रसमञ्जरीटीका न केवलमन्यतमा अपितु सर्वाष्टीका अतिशेते बोधदृशा व्याकरणप्रयोगबाहुल्यात्। यथा कालिदासीयग्रन्थानां शब्दं शब्दं प्रति, प्रतिशब्दं

समास–प्रकृति-प्रत्यय-धात्वादीन् मल्लिनाथः प्रायुङ्क्त तथैवायमपि व्याकरणदिशानिर्देशनक्षमां स्वटीकां पाठकबोधगम्यां कर्तुं प्रायतत। अस्मादेवकारणादियं छात्रतोषिणी विद्वन्मनोरञ्जनीचाभवत्।

अयं टीकाकारोऽपि मैथिलएवासीदिति श्रूयते। अथवा मैथिलेषु प्राचीनोपनामकम् उपाध्याय आसीत्। तद्यथा–नव्यन्यायशास्त्रप्रवर्तकः गंगेशोपाध्यायः सिद्धतान्त्रिकः मदनउपाध्याय, इत्यादि विद्वांसो मैथिला एवासन्।

आधुनिककाले उपाध्यायोपाधिधारिणां संख्यानाधिका, अपितु झा, पाठक मिश्रादीनां संख्या आधिक्येन मिलति।

अयमुपाध्यायः श्रीमता भट्टोजिदीक्षितेन प्रणीतायाः सिद्धान्तकौमुद्याः 'सिद्धान्तकौमुदी-गूढ़ार्थफक्किकाप्रकाश' नामकं ग्रन्थं वा टीकां व्यरचयत्। श्रीमता भट्टोजिदीक्षितस्य जन्मसमयः १५७०-१६५० वि०सं० मन्यते विद्वद्भिः। अतएव तदुपजीव्य कृता टीका ग्रन्थो वा तदुत्तरकालीन एव भवितुमर्हति। सुतराम् इन्द्रदत्तोपाध्यायस्य जन्मसमयः १८०० खीष्टशताब्दी मन्यते विद्वच्चणैः।

इन्द्रदत्तोपाध्यायः गर्गगोत्रीयः लालमणिउपाध्यायस्य तथा क्षमावतीदेव्याः पुत्रः आसीत्। अस्य पितामहस्य नाम मोहनलालः एवं प्रपितामहस्य नाम मुरलीधरः आस्ताम्। अतः परमस्य ग्रामादेस्तथा वंशधरस्य नाम कालकवलितमेव मन्तव्यम् अप्राप्यत्वादिति शम्।

**रसमञ्जर्याः उपरि विभिन्नानां टीकानां वैशिष्ट्यं टीकाकर्तॄणां च परिचयः–**

**टीकानाम**–रसिकरञ्जिनी, टीकाकारः–गोपालभट्टः रसमञ्जर्याः आदिम टीकायाः रसिकरञ्जिन्याः प्रणेता गोपालभट्टः स्वकीयं परिचयं नैव कुत्रापि स्फुटतया समुल्लिखति। अतएवैतदीयः देशकालकुलवंशादिपरिचयः सुलभतया नोपलभ्यते। केवलमयमात्मनः पितामहस्य नाम नरसिंह भट्ट इत्युपसंहारपद्येऽभिदधाति। एवं पितुरपि हरिवंशभट्टस्य तत्रोल्लेखं करोति।

**श्रीमद्राविडवृन्दबुधिविधुः श्रीमन्नृसिंहोऽभवद्**
**भट्टश्रीहरिवंश उत्तमगुणग्रामोऽभवत्तत्सुतः।**
**तत्पुत्रस्य कृतिस्त्वियं वितनुतां गोपालनाम्नोमुदं**
**गोपीनाथपदारविन्दमकरन्दानन्दचेतोऽलिनः।।**

नरसिंह भट्टश्च विद्वत्समाजे नितरां सम्मानभाजनमासीत्। द्रविडेति पदेन भट्टोपनाम्ना चास्य दक्षिणदेशवासित्वं वैष्णवसम्प्रदाये दीक्षितत्वं च सम्भाव्यते।

अन्यथा नरसिंह-हरिवंश-गोपालादि-भगवन्नाम्नामनुकीर्तनं सन्ततिषु च स्यात्। मद्रास-विश्वविद्यालयतः प्रकाशितायां बृहद्हस्तलेखसूच्यां 'चैतन्य महाप्रभोः शिष्यतया गोपालभट्टस्य उल्लेखः वर्तते। यतो हि प्रथमेयं टीका अतः खृष्टीये षोडशशतके इयं विरचिताभूत् इति सम्भाव्यते। अस्य च पुष्टिः आधुनिकगवेषणापरैः विद्वद्भिरपि कृतैव। रामसुरेशत्रिपाठी महोदयः रसमञ्जरीटीकानां क्रमनिर्णयावसरे प्रथमतः रसिकरञ्जिनी टीकामुपादत्ते। एवं 'सुरभि' टीकाकृता कविशेखरबदरीनाथ झा महोदयेन व्याहारि। अथ च सुषमाव्याख्याकृता डॉ० जगन्नाथ पाठकमहोदयेनापि रसिकरञ्जिन्याः प्रथमोल्लेखो विहितः। न चापीह कस्यापि टीकाकारस्य विहिता वार्ता तस्मादाभ्यन्तरं बाह्यं च साक्ष्यमस्याः प्राचीनत्वं प्रसाधयति।

टीकाकृतोऽस्य गोपालभट्टस्य अपराः अपि कृतयः समुपलभ्यन्ते।

यथा– आह्निककौमुदी-अमेरिका ३०४२।

कालकौमुदी अथवा समयकौमुदी–न्यु. के.के.–प पृ० १४०

कृष्णकर्णामृतस्य कृष्णवल्लभा टीका–प्रथमाध्यायमात्रं,

रुद्रभट्टप्रणीतस्य शृङ्गारतिलकस्य रसतरङ्गिणी व्याख्या च–विकानेर-३७१५ इति विदितं मातृकानुशीलनपराणां गवेषणाप्रियाणां विदुषाम्। यद्यपि परमादरणीयः दिवंगतः डा० वी० राघवन् महोदयः अस्यैव विदुषः काव्यप्रकाशटीकामुल्लिखति[1] तथापि तत्र विदुषाम् ऐकमत्यं नास्ति।

**टीका-परिचयः–**

टीकेयं सरलतमा लघुकलेवरा च श्लोकानां व्याख्या नास्ति संयता। व्याख्याशैली सहजा, भाषा तु प्रसादगुणोपेता पाठकान् प्रसादयति। यथास्थानं शास्त्रान्तराणामुद्धरणानि छन्दसामलङ्काराणां च निर्देशाः टीकायाः सौन्दर्यमभिवर्धयन्ति। गम्भीरचिन्तनस्याभावेऽपि ग्रन्थकृदभिप्रायावबोधने नितरां समर्थेयं टीका विदुषः प्रमोदयत्येव। नाद्यावधिप्रकाशितेयं टीका भारतस्य विविधेषु मातृकागारेषु हस्तलेखतया समुपलभ्यते।

२. **टीकानाम – अज्ञातम्**

**टीकाकृन्नाम– रूपगोस्वामी**

---

१- न्यू. के. के. मद्रास विश्वविद्यालय– भाग-६-पृ. १४६

इन्डिया आफिस लाइब्रेरी लन्दन मातृकागारे रूपगोस्वामि महोदयानां रसमञ्जर्याः एका टीका वर्ततइति श्रूयते[१]। नान्यत्र टीकेयं दृष्टिपथमवतीर्णा। प्रथितानां रूपगोस्वामि महोदयानां कृतिगणनावसरे न केनापि विदुषा तत्कृता रसमञ्जरी टीका उल्लिखिता। रसमञ्जर्याः टीकाकारः रूपगोस्वामिमहोदयो विख्यात विविधग्रन्थकर्ता रूपगोस्वामिमहाशय एव भवितुमर्हति। यतः रूपगोस्वामिमहोदयेन उज्ज्वलनीलमणि नाम्नः नायकनायिकानिरूपणात्मकस्य ग्रन्थस्य रचना विहिता। अन्यच्च रसमञ्जर्याः प्रायः प्रारम्भिक टीकाकर्तारः श्रीवैष्णवमतावलम्बिनः दृश्यन्ते। यथा–रसिकरञ्जिनीकारः द्रविडगोपालभट्टः, परिमलकारः शेषचिन्तामणिः, आमोदकारः रङ्गशायिन् प्रभृतयः। महाप्रभोश्चैतन्यस्यैव शिष्यः द्रविडगोपालभट्टः रसमञ्जर्याः आद्यष्टीकाकारः सिध्यति। रूपगोस्वामि महाशयोऽपि महाप्रभोश्चैतन्यस्य शिष्याग्रगण्यः आसीत्। अतः रसमञ्जर्याः टीका रूपगोस्वामिमहाशयानां सम्भाव्यते।

रूपगोस्वामिमहाशयानां देशकालादीनां विषये नास्ति सन्देहः। रूपगोस्वामिहाभागाः चैतन्यमहाप्रभुमहाशयानां प्रधानशिष्याः आसन्। चैतन्यमहाप्रभुभिः सम्प्रेरिताः श्रीमन्तः वृन्दावने निवासं स्वीकृतवन्तः। श्रीमन्तः महाकवेर्भानुदत्तस्य समकालीनाः सिध्यन्ति। समयश्च पञ्चदशशतकस्योत्तरार्धः षोडशशतकस्य पूर्वार्धश्च भवितुमर्हति। श्रीमद्भिः सप्तदशकृतीनां रचना विहिता। श्रीमतां प्रथितकृतयः हंसदूतकाव्यं, विदग्धमाधवनाटकं, ललितमाधवनाटकं, दानकेलिकौमुदी भाणिका, भक्तिरसामृतसिन्धुः, उज्ज्वलनीलमणिः नाटकचन्द्रिका प्रभृतयः सन्ति।

रूपगोस्वामिमहाशयानां शास्त्राध्ययनस्य पाण्डित्यस्य च विषये नास्ति सन्देहावसरः। श्रीमद्भिः साहित्यव्याकरणवेदान्तप्रभृतिशास्त्राणां सम्यगध्ययनं विहितमासीत्। श्रीमतां कृतिषु सर्वत्र पाण्डित्यं गहनचिन्तनं च परिलक्ष्यते। सम्पूर्णस्य रससिद्धान्तस्य नायकनायिकाविवेचनस्य अध्यात्मपरिवेशे निरूपणं रूपगोस्वामिमहाशयानामाध्यात्मिकविचारधारां परिपुष्णाति साहित्य-शास्त्रमधिकृत्य श्रीमतां कृतित्रयं प्राप्यते।

(१) भक्तिरसामृतसिन्धुः, (२) उज्ज्वलनीलमणिः (३) नाटकचन्द्रिका च।

रूपगोस्वामिमहाशयेन विरचितायाः रसमञ्जरीटीकायाः विषये न कापि विशिष्टा सामग्री दृष्टिपथमवतरति।

---

१- रसमञ्जरी टीका – रूपगोस्वामी १२३१-२

३. **टीकानाम – परिमलः**

**टीकाकृन्नाम – शेषचिन्तामणिः**

परिमलकारस्य शेषचिन्तामणेः समयादीनां विषये नास्ति विवादः। शेषचिन्तामणेर्जन्म सुप्रतिष्ठिते श्रोत्रियविप्रकुले जातम्। अस्य कुलं वैष्णवसम्प्रदायानुगमासीत्। नाम्ना मङ्गलाचरणेन चायं दाक्षिणात्यः प्रतीयते[१]। नृसिंहस्योपासनमपि श्रीवैष्णवसम्प्रदायानुकारिणः अहोबिल पीठानुयायिनः कुर्वन्ति। अस्य पितुर्नाम शेषनरसिंह आसीत्[२]। ज्येष्ठभ्राता च शेषश्रीकृष्णः तत्समयस्याद्वितीयवैयाकरणः भट्टोजिदीक्षितस्य शिक्षागुरुरासीत्[३]।

वाराणसीमधिवसन्नयं भट्टोजिदीक्षितमपाठयदिति श्रूयते। अतः प्रतीयते शेषचिन्तामणेः पूर्वजाः उत्तरापथमागत्य अत्रैव वसतिमकुर्वन् इति। परिमलटीकायाः एका मातृका १५५२ मिते ख्रिष्टाब्दे लिखिता प्राप्यते। शेषश्रीकृष्णस्य समयः खृष्टीयः षोडशशतक इति निश्चितम्। अतः परिमलकारस्य शेषचिन्तामणेः षोडशशतकावस्थितिरवगम्यते। शेषचिन्तामणेः निवासस्थानम् ब्रह्मपुरनाम्ना प्रसिद्धम् आसीत्। परिमलटीकातिरिक्तं शेषचिन्तामणिना छन्दःप्रकाशः, रुक्मिणीहरणं नाटकम्, मेघदूतटीका च प्रणीता इति कृतित्रयमस्योपलभ्यते।

**परिमलटीका-परिचयः–**

शेषचिन्तामणिना संक्षेपत उदाहरणश्लोकानां व्याख्या विहिता। प्रथमव्याख्याकृता गोपालभट्टेन समासतः श्लोकाः व्याख्याताः। परं तत्परवर्तिना तत् समसामयिकेन वानेन ईषद्वैशद्यमिह विहितम् इति दृश्यतेऽस्माभिः। परिमलस्य भाषा सरसा सुबोधा गतिशीला च वर्तते। परिमलकारः व्याख्यावसरे स्वकीयोक्तिपरिपुष्ट्यै उपमामप्युद्धरति। शब्दानां व्युत्पत्तिप्रदर्शनावसरे व्याकरणसूत्राणि निर्दिशति येन तस्य पाण्डित्यं ख्यापितं भवति। यथास्थानमलङ्काराणां छन्दसां परिचयमपि प्रददात्यस्मभ्यम्। यत्र च नायिकानिरूपणे

---

१- -------कलिशेषावतारश्रीमच्छेषनृसिंहतनयेन
नृसिंहचरणोपासिना ब्रह्मपुरवासिना श्रीशेषचिन्तामणिना निर्मितो रसमञ्जरीपरिमलः समाप्तः।

२- अज्ञानहिरण्यकशिपोर्दलने साक्षान्नृसिंह एव परः।
तमहं शेषमुपासे पितरं श्रीमन्नृसिंहाख्यम्।।

३- निखिलविद्वन्मुकुटमणि-----शेषावतंसानां श्रीकृष्णाख्य
पण्डितानां चिरायार्चितयोः पादुकयोः प्रसादाद् आसादितशब्दानुशासनाः (भट्टोजिदीक्षिताः)- --। मनोरमाकुचमर्दिनी पृ. १।

शङ्का समुपतिष्ठते तत्र ग्रन्थकृन्निर्दिष्टक्षरणमपाकरोति। इत्थं परिमलकारेण साधारणतः श्लोकस्यार्थविषये तत्रत्यच्छन्दोलङ्कारादीनां च जिज्ञासुभ्यः सरसा सुबोधा च टीका लिखिता। नायकनायिकाविवेचने कोऽप्यलौकिकः प्रतिभायाः प्रकाशः कापि विशिष्टा सामग्री वा नात्र दृष्टिपथमवतरति। रसमञ्जरीग्रन्थस्यापरटीकाकारः आमोदकारः गुरुजाल रङ्गशायिन्महोदयः प्रायः परिमलकारमतं दूषयति। कतिषु च स्थलेषु परुषपदप्रयोगमपि तदर्थं करोति[1]। परमुभयोस्तुलनात्मकाध्ययनेन ज्ञायते यदामोदकारः प्रायः बहुषु स्थलेषु परिमलकारस्याधमर्णः।

रसमञ्जर्याः अपरस्याः टीकायाः रसामोदाभिधायाः प्रणेता त्रिविक्रममिश्रः टीकायाः अलङ्कारादीनां विषये परिमलकारस्य मतमनुसरति।

रसमञ्जर्याः सुरभिटीकाकारः आधुनिकालोचकः कविशेखरः बदरीनाथ झा शर्मा अलङ्कारविषये प्रायः परिमलकारमतं युक्तिप्रमाणाभ्यां दूषयति। कतरन्मतं श्रेय इति तु सुधीभिरालोचनीयम्। इत्थं परवर्तिभिष्टीकाकारैः परिमलस्य सम्यगध्ययनं कृत्वैव यथामति टीका व्यलेखि। तस्मादस्याधिका प्रसिद्धिरभूद्विद्वत्समाजे इति निर्विचिकित्सं वक्तुं शक्यम्।

## ४. टीकानाम – विकासः

### टीकाकृन्नाम – गोपालार्यः

विकासटीकाकारेण गोपालार्येण आत्मपरिचयमधिकृत्य साक्षात् न किञ्चिदुक्तम्। अतोऽस्य सूत्रतयोपलभ्यते परिचयः। "हिस्ट्री आफ संस्कृत पोएटिक्स" नामके ग्रन्थे भारतरत्न विरुदभाजा स्वनामधन्येन पी०वी० काणे महोदयेन विकासकारस्य संक्षेपेण परिचयः प्रस्तुतः रसमञ्जर्याः विकासाभिधायाः विलासनाम्न्या वा व्याख्यायाः प्रणेता गोपालार्यनामकः वोपदेव आसीत्। कौण्डिन्यगोत्रोत्पन्नस्यास्य पितुः नाम नृसिंह इत्यासीत् "महिसूर ओरिएण्टल रिसर्च इन्स्टि्यूट" मातृकागारे संरक्षितायामस्याः मातृकायां विकासटीकाकारस्य नाम गोपालार्य इति दृश्यते।

बहूनां मतिमतां धारणा यदयं विकासकारः दाक्षिणात्य आसीत्। यतो हि कौण्डिन्यगोत्रीयाः ब्राह्मणाः दक्षिणापथ एव बाहुल्येन भवन्ति। अन्यच्च पितुः नृसिंह इति नाम गोपालार्या इति लेखकस्य नाम दक्षिणदेशभवत्वमथ च

---

१- यत्तु परिमलकारस्य लेखनं----तत्र प्रर्णायनां प्रणयधारायाम् अनाघ्रातव्युत्पत्तिगन्धस्यापि श्रोत्रियवेतालस्य कथम् अतिविदग्धताजनक-साध्वी रसमञ्जरीव्याख्याने प्रवृत्तिरिति विस्मयामहे। आड्यार मन्युस्क्रिप्ट-पृ. ८

वैष्णवकुलसम्भूतत्वं च समर्थयति। एतत्तु निर्विवादमेव यत् महाकविना भानुदत्तेन भारतस्य दक्षिणप्रान्ते निजामराज्ये रसमञ्जर्याः रचना विहिता। अतः दक्षिणप्रान्ते रसमञ्जर्याः प्रथमतः प्रचारोऽप्युचित एव। अतएव रसमञ्जर्याः प्रायः प्रारम्भिकटीकाकर्तारः दाक्षिणात्याः एवावलोक्यन्ते। यथा रसिकरञ्जिनीकार गोपालभट्टः द्राविडः परिमलकारः दाक्षिणात्यः एवम् आमोदकारः रङ्गशायिन्नपि। डा० वी० राघवन् महोदयेन विकासकारस्य निवासस्थानमधिकृत्य उक्तम्–गोपालाचार्यः महाराष्ट्र प्रदेशान्तर्गत जबलो नामकग्रामवास्तव्यस्य कौण्डिन्यगोत्रियस्य नृसिंहस्यात्मज आसीदिति।

विकासकारस्य समयः भारतरत्न पी०वी० काणे महोदयेन विस्तरशः विचारितः[१]।

तैरुक्तम्–स्टेनमहोदयस्य जम्मूनगरस्थमातृकासूचिग्रन्थे गोपाललिखितायाः रसमञ्जर्याः विकासाभिधानायाः विलासनाम्न्या वा टीकायाः समयः १९८४ संवदिति वर्तते। परमेतन्नयुक्तम्। यतो हि टीकासमयः १४९४ इत्युल्लिखितमस्ति, एवं तत्रोल्लिखितम् अङ्गिरस्नामकं शक संवत्सरं बोधयति न तु विक्रमसंवत्सरम्[२]। अतः मातृकासमयः १५७२ ख्रिष्टाब्दः भवितुमर्हति, फलतः स्वनामधन्या डा० पी०वी० काणे महाभागाः विकासकारस्य समयः ख्रिष्टीयः षोडशशतकः इति साधयन्ति।

मातृकासूचिग्रन्थेषु प्राप्तया सूचनयाऽस्याः टीकायाः कलेवरं विशालमस्तीति ज्ञायते। "महिसूर ओरिएण्टल इन्स्टिच्यूट्"[३] मातृकागारे संरक्षितायां मातृकायां द्वाविंशत्यधिकं शतं पत्राणि सन्त्यस्याः"। वरोदा ओरिएण्टल इन्स्टिच्यूट"[४] मातृकागारे संरक्षिता मातृका तु सप्ततिपत्रमितास्याः वर्तते। परवर्तिभिष्टीकाकारैः विकासकारस्य नामोल्लेखादिकं न कृतम् अतोऽस्याष्टीकाया अपेक्षितप्रचाराभावोऽनुमीयते।

---

१. हिस्ट्री आफ संस्कृत पोएटिक्स–पी०वी० काणे – पृ० ३०७

२. प्रो० एस्०आर्० भण्डारकर रिपोर्ट–१४०४-६ पृ० -३७ एवं प्रो० गोडे आनुयलस आफ बरोदा ओ.रि.इ.–वाल्यूम् १६ पृ० १४५-१४७

३. २८६६३-सी-१८९२/२–विकास–३१-१२२ गोपालाचार्य पी०दे० अपूर्णा।

४. १८९-७१८८–रसमञ्जरी-४८-७० डी०सी०सी० संवत् १४०४ विकास संवत् १७०२ अपूर्णा।

५. **टीकानाम – व्यङ्ग्यार्थकौमुदी**

**टीकाकृन्नाम – अनन्तपण्डितः**

विविधकाव्यग्रन्थानां निर्माणपटीयसः प्रसिद्धविदुषो रसमञ्जर्याः व्यङ्ग्यार्थकौमुदीनाम-टीकाकर्तुरनन्तपण्डितस्य देशकालादिकं प्रसिद्धमेव। यतो हि मङ्गलाचरणावसरेऽयमात्मनः स्वस्याश्रयदातुश्च परिचयं स्वयमस्मभ्यं प्रददाति स्फुटमेव। अयमिह पञ्चत्रिंशन्मितैः श्लोकैः मङ्गलमाचरत्[1]। तत्र प्रारम्भस्य पञ्चश्लोकाः भगवतः श्रीकृष्णस्य नमस्कारात्मकाः। एतेन ग्रन्थकर्तुः श्रीकृष्णं प्रति भक्तिभावः परिलक्षितो भवति। पश्चादिहाश्रयदातुः काशीनरेशस्य चन्द्रभानुनृपतेः तत्पूर्वजानां च चरितमुल्लिखितम्। अनन्तपण्डितस्य देशकालकृतीरधिकृत्य प्रचुरा सामग्री समुपलभ्यते।[2-3] अस्य पूर्वजाः गोदावर्याः पुण्यनद्यास्तीरे पुण्यस्तम्बनामकस्य नगरस्य वासिन आसन्। पश्चात् तैः वाराणसी निवासस्थानतया स्वीकृता। अस्य प्रपितामहस्य नाम नीलकण्ठपण्डित आसीत्। तस्य पुत्रः बालोजिपण्डितः तत्पुत्रः तिमाजिनाम्ना ख्यातः त्र्यम्बकपण्डितः। स एव अनन्तपण्डितस्य पिताऽऽसीत्। उक्तं च अनन्तपण्डितेन–श्री त्र्यम्बकतनूजेन पण्डितानन्तशर्मणा[4] इति। अनन्तपण्डितस्य पौत्रः प्रथिततार्किकः महादेवः स्वकीयग्रामस्याभिधानेन पुण्यस्तम्बाभिधं ग्रन्थं प्रणीतवानिति श्रूयते। अनन्तपण्डितस्य चतस्रः कृतय उपलभ्यन्ते[5]–

१. रसमञ्जर्याष्टीका व्यङ्ग्यार्थकौमुदी–अस्या रचना अनन्तपण्डितेन चन्द्रभानुनृपतेरादेशमासाद्य वाराणस्यां १६३६ ख्रिष्टाब्दे कृतेति स्फुटं प्रमाणैरवगम्यते।

२. गोवर्धनाचार्यस्यार्यासप्तशत्याष्टीका व्यङ्ग्यार्थदीपिनी नाम्नी वर्तते[6]। अस्या निर्माणमपि वाराणस्यां १६४५ ख्रिष्टाब्दे विहितम्। प्रकाशनमेतस्याः काव्यमालायां मूलग्रन्थेन सह विहितं समुपलभ्यते।

३. मुद्राराक्षस-पूर्वपीठिका–विशाखदत्तलिखितस्य मुद्राराक्षसनाटकस्य परिचयार्थं

---

१. रसमञ्जरी व्यङ्ग्यार्थ कौमुदी–भूमिका–१-३५ श्लोक
२. न्यू केके.–मद्रास विश्वविद्यालय–१९४९ पृ० १३० वाल्यूम–१
३. काशी की पण्डित परम्परा – प्र.स. ६७
४. रसमञ्जरीटीका व्यङ्ग्यार्थकौमुदी– श्लोक ३०
५. के. के. मद्रास वि. वि. १९४९ पृ० १३३ वाल्यूम-१
६. व्यङ्ग्यार्थकौमुदी– श्लोक १३ पृ०सं० ४८

प्रणीतो गद्यात्मको भागः। अस्याः प्रकाशनं गङ्गा ओरिएण्टल सीरिज-३ बिकानेरतः जातम्।

४. स्वानुभूतिनाटकम्–अस्य विषये निम्नलिखितः अपूर्णसङ्केतो मिलति। "ऋषिराज एण्ड कम्पनी। पृ० ९–ओ.यू.डी.एच.–८.८ एवं लेखकस्य नाम अनन्तरामेति" प्राप्यते।

व्यङ्ग्यार्थकौमुदीकारस्य समयविषयेऽपि नास्ति विवादः। यतः व्यङ्ग्यार्थकौमुद्याः निर्माणं १६३६ ख्रिष्टाब्दे विहितम्। अतोऽस्य समयः खृष्टीयः सप्तदशशतकः सिध्यति। पं० बलदेव उपाध्यायः डा० वी० राघवन् महोदयश्चास्य समर्थनं कुरुतः। तदीयपुस्तकयोर्यथामति दृष्टमस्माभिः स्वारस्यम्।

अनन्तपण्डितस्य कृतीनामध्ययनेन ज्ञायते यदयं साहित्यशास्त्रे लब्धप्रतिष्ठः आसीत्। आलङ्कारशास्त्रस्य छन्दःशास्त्रस्य कोषादीनां च गहनाध्ययनस्य प्रभावः व्यङ्ग्यार्थकौमुद्यां सर्वत्र दृष्टिपथमवतरति। व्याकरणशास्त्रस्य, न्यायशास्त्रस्य, कामशास्त्रस्य च अध्ययनं सम्यक्तया ग्रन्थकृता कृतमासीत्। भारतस्य प्रथितविद्याकेन्द्रभूतायाः वाराणस्याः तत्कालीनशासकस्यायं सभापण्डितः आसीदित्यनेनैव ग्रन्थकर्तुः गभीरतमं पाण्डित्यमनुमातुं शक्यते। इयं व्यङ्ग्यार्थकौमुदी साहित्याध्येतॄणां कृते नितरामुपकारिका वर्तते। भाषाऽस्याः सरला स्वाभाविकी स्वल्पबुद्धिशालिनोऽपि गम्या सरसा च वर्तते। प्रायो लघुवाक्यानां प्रयोगो दरीदृश्यते। बहुषु स्थलेषु टीकाकारः कोशतः व्याकरणव्युत्पत्तेश्च स्वकीयं पाण्डित्यं प्रख्यापयति। अभिप्रायावबोधाय विश्वामरवैजयन्त्यादिकोशानामुद्धरणं टीकाकृत् ददाति। आवश्यकस्थलेषु व्युत्पत्त्यादिप्रदर्शनावसरे सूत्रादीनुल्लिखति येन जिज्ञासूनां मनस्तोषमावहति। अलङ्काराणां छन्दसां च लक्षणपुरःसरं समन्वयं प्रस्तौति। साधारणतः प्रथितवृत्तानां लघुलक्षणानि विहाय श्लोकबद्धलक्षणान्येव प्रदर्शयति। साहित्यशास्त्राङ्गभूतानां ध्वन्यादीनामालोचनमप्यावश्यकस्थलेषु विहितम्[1]।

अस्यां टीकायां परेषां व्याख्याकृतां मतानि समर्थनाय निराकरणाय वा नोल्लिखितानि सन्ति। नवेह कुत्रापि शास्त्रार्थस्य दर्शनं वा ग्रन्थाशयावबोधोऽत्र मिलति।

**६. टीकानाम – आमोदः**

**टीकाकृन्नाम – गुरजाल रङ्गशायिन्**

---

१- व्यङ्ग्यार्थकौमुदी– श्लोक ३१ पृ०सं० ८८

आमोदकारस्य गुरजालरङ्गशायिन् महोदयस्य देशकालादिकमधिकृत्य प्रचुरा सामग्री समुपलभ्यते। "हैदराबाद आर्कियलाजिकल् डिपार्टमेण्ट् पब्लिकेशन्स" नामकसंस्थया प्रकाशितस्य शृङ्गारमञ्जरीग्रन्थस्य भूमिकायां डॉ० वी० राघवन्महोदयेन आमोदकारस्य देशकालादिकं साधु सपरिष्कारं च विवेचितम्।

उपलब्धासु पाण्डुलिपिषु लेखकस्य नाम "गुरजालशायिन्" उत वा "गुरजालरङ्गशायिन्" इति प्राप्यते। आमोदकृता ग्रन्थस्य प्रारम्भे स्ववंशस्य परिचयो दत्तः।

**आसीद्यश्चिलकमर्यन्वयजलधिशशी वेंकटाचार्यवर्यः**
**स्वभ्यस्ताम्नायशास्त्राधिकसकलकलः सोऽयमात्मोपमानान्।**
**लेभे पुत्राननन्तप्रभुमणिवरदाचार्यरङ्गार्यधर्मा-**
**चार्याख्यान् धर्मसूनोरजनि कविबुधश्लाघितो रङ्गशायी ॥४॥**

उपर्युक्तपरिचयेन ज्ञायते यत् चिलकमद्री वंशोद्भवः अधिगतानेकशास्त्रः वेंकटाचार्यः अस्य पितामहः आसीत्। वेंकटाचार्यस्य चत्वारः पुत्राः जाताः। अनन्ताचार्यः वरदाचार्यः रङ्गाचार्यः धर्माचार्यश्चेति। उपर्युक्तेषु कनिष्टतमाः धर्माचार्याभिधानाः एव रङ्गशायिमहोदयस्य पितृचरणाः आसन्। एतदतिरिक्तं मद्रास राजकीयपुस्तकालये विद्यमानायां पाण्डुलिप्यां (डी.न. १२९४१) आमोदकारस्य परिचयविषये ग्रन्थान्ते विशिष्टा सामग्री समुपलभ्यते। तत्रोक्तं च–

श्रीमद्वाधूलमहादेशिकचरणसरसिजोपासनावासनासमधिगतसकलशास्त्रसमुदयेन श्रीचिलकमर्रिकुलकलशजलधिकौस्तुभधर्माचार्यतनयेन तदग्रजानन्ताचार्यवात्सल्यवर्धितेन समस्त-दाक्षिणात्यमैथिलकविताश्लाघालङ्घनजङ्घालदृश्यनृत्योभयप्रबन्धनिर्माणमार्मिकेण वाग्गेयकारचक्रवर्तिना श्रीमद्गुरुजालशायिपण्डितेन विरचितायां रसमञ्जरी व्याख्यायां सख्यादिनिरूपणं नाम तृतीयं प्रकरणम् इति।

उपर्युक्त परिचयाधारेण ज्ञायते यत् श्रीरङ्शायिमहाभागः श्रीवैष्णवमतानुयायी आसीत्। पूर्वजनामाचार्येत्युपाधिधारणेनास्य पुष्टिर्भवति। यतः दाक्षिणात्याः श्रीवैष्णवाः "आचार्य" इत्युपाधिं नाम्ना सह योजयन्ति। रङ्गशायिमहोदयेन श्रीवैष्णवपीठासीनानां वाधूलमहादेशिकस्वामिनां निकटे अध्ययनं विहितम्। वाधूलमहादेशिक एव दोड्ड्य्याचार्य उत वा महाचार्य इति नाम्नापि प्रथितः। येषां समयः षोडशशतकस्योत्तरार्धः सप्तदशशतकस्य पूर्वार्धो वा सिध्यति। यैः

चण्डमारुतपाराशर्यविजय–अद्वैतविद्याविजयवेदान्तदेशिकविभव-प्रकाशिकाप्रभृतयः कृतयः लिखिताः।

आमोदकृता परिमलकारस्य मतानि प्रायः दूषितानि। [1]परिमलकारस्य समयः षोडशशतकस्य पूर्वार्धमिति सुनिश्चितम्। एतदतिरिक्तमामोदकृता अप्पय दीक्षितस्य कुवलयानन्दः उद्धृतः (पृ० ७६.२०६)।

एकत्र व्याकरण-सम्बन्धिचर्चावसरे मनोरमाया उल्लेखो विहितः (पृ० ४७२)। अप्पय दीक्षितः वेंकटपतिरायस्य सभापण्डितः आसीत्। यस्य समयः १५८५ खृष्टाब्दतः १६१४ खृष्टाब्दपर्यन्त आसीत्। प्रौढमनोरमाकारः भट्टोजिदीक्षितः तत्समसामयिकः सिध्यति। अतः आमोदकार समयस्य पूर्वसीमा षोडशशतकस्योत्तरार्धः सप्तदशशतकस्य प्रारम्भो वा भवितुमर्हति।

शृङ्गारमञ्जरीकृता अकबरशाहमहोदयेन आमोदकारः आक्षिप्तः समर्थितश्च। शृङ्गारमञ्जरीकारः गोलकण्डा शासकस्य अबुलहसन् महोदयस्य समसामयिकः आसीत्। यस्य शासनकालः १६७२ खृष्टाब्दात् १६८७ खृष्टाब्दपर्य्यन्तमासीदिति स्फुटप्रमाणैरवगम्यते। अतः उपर्युक्तविवेचनाधारेण आमोदकारस्य समयः सप्तदशशतकस्य पूर्वार्धे सिध्यति।

**देशः–**

आमोदकारस्य पूर्वजाः पितामहः पिता च चिल्कमर्री ग्रामवासिनः आसन्। यतस्तेषां नामाग्रे चिल्कमर्रीति प्रयोगः दृश्यते। चिल्कमर्री अधुना आन्ध्रप्रदेशस्य पूर्वगोदावरी मण्डले वर्तते। पश्चात् आमोदकारः रङ्गशायिमहोदयः स्वीयपूर्वजानां प्रदेशं त्यक्त्वा गुरजाल नामकापरप्रदेशे न्यवसत्। गुरजालनामकग्रामः अधुना आन्ध्रप्रदेशस्य गुण्टूर् नामक मण्डलान्तर्गते पालनाडानुमण्डले वर्तते।

श्रीरङ्गशायिमहोदयः दृश्यकाव्यनिर्माणे नृत्योपयुक्तगीतिकाव्यादीनां निर्माणे च प्रथितः आसीत्। उक्तं च तेनैव स्वीयपरिचयावसरे–"दृश्यनृत्योभयप्रबन्ध-निर्माणमार्मिकेण" इति। आमोदकृता स्वीयटीकायां "शृङ्गारलहरी" नामककृतेरुल्लेखोविहितः–"नवभूषणे समीहा मदीय शृङ्गारलहर्याम्" इति। अनेन ज्ञायते यत् शृङ्गारलहरी नाम्नी कृतिरनेन लिखिता। आमोदकारः आत्मानं वाग्गेयकारचक्रवर्तीत्यभिदधाति। अनेन आमोदकारस्य संगीतशास्त्रविषयकप्रौढज्ञानमव-गम्यते। आमोदकारः साहित्यशास्त्रातिरिक्तं सांख्ययोगन्यायव्याकरणमीमांसाप्रभृतिशास्त्रेष्वपि

---

१. यत्तु कलहंसनादपाठं कल्पयित्वा परिमलकारस्य व्याख्यानं तन्मन्दम्। १२५ श्लोक व्याख्या प्रसङ्गे–आमोद

अप्रतिहतगतिरासीत्। उक्तं च तेनैव–

**व्याहर्तुं व्यासशास्त्रं कणचरणमतं पोषितुं पाणिनीयम्**
**संस्कर्तुं भट्टतन्त्रं विवरितुमखिलं योगसर्वस्वमाप्तुम्।**
**संख्यातुं सांख्यशास्त्रं रचयितुममलं काव्यमव्याहतार्थं**
**भर्तुस्साहित्यसीमां प्रभवति नितरां शायिवाग्गेयकारः ॥५॥**

इति।

**टीकापरिचयः–**

रङ्गशायिमहोदयेन रचिता आमोदटीका अद्यावधि लिखितेषु रसमञ्जरीटीकासु बृहत्तमा वर्तते। अत्रातीव नायकनायिकाविषयकाः भानुदत्तविचाराः विशदीकृताः। यद्यपि भाषा सरला वर्तते तथापि शास्त्रीयतत्त्वसमायोजनेन विवेच्यविषयः जटिलः सञ्जातः। व्याकरणशास्त्र-सम्बन्धिनी चर्चा पदानामिह व्युत्पत्तिः सूत्रकारिकादयः टीकायाः जटिलतामभिवर्धयन्ति। न्यायशास्त्रस्यापि समीचीनसमायोजनमत्र दृश्यते। व्याकरणशास्त्रीयचर्चा इव न्यायशास्त्रीया चर्चा अपि गत्यवरोधमुत्पादयति। आमोदकृता अलङ्कारच्छन्दआदीनां विषये नाधिकं विवेचितम्। समासतः, आमोदटीकायां टीकाकारेण स्वीयन्यायव्याकरणसाहित्यविषयकं पाण्डित्यं प्रदर्शितं यथेष्टम्। यद्यपि विद्वज्जनानां कृते एषा टीकोपयोगिनी भवतु नाम परमध्येतॄणाम् अन्तेवासिनां कृते जटिलतमा एषा टीका नाधिकोपयोगिनी विद्यते।

इहामोदे वैष्णवीं भक्तिं परिपोषयता व्याख्याकृता प्रायः सर्वत्र नायकतया श्रीकृष्णः निरूपितः। श्रीकृष्णः एव पतिरूपपतिर्वैशिकश्च भवति। स एवानुकूलदक्षिणशठधृष्टरूपेण निरूपितः। एवमेव राधैव खण्डिताविप्रलब्धाद्यवस्थासु नायिका भूमिकायां निरुपिता। फलतः ग्रन्थकृतः वैष्णवीभक्तिर्विद्योतिताऽभूदिहेति निर्भयं वक्तुं शक्यम्। आमोदकारस्यैष व्याख्याया दोषः गुणो वेति तु सुधीभिः सहृदयैरालोचनीयम्।

अद्यावध्यस्याः टीकायाः प्रकाशनं नैव विहितम्।

**७. टीकानाम – व्यङ्ग्यार्थकौमुदी उत वा समञ्जसा**

**टीकाकृन्नाम – विश्वेश्वरपण्डितः**

समञ्जसया व्यङ्ग्यार्थकौमुद्या वा टीकायाः प्रणेतुः पण्डितप्रवरस्य विश्वेश्वरस्य देशकालादीनां विषये पर्याप्तं प्रमाणं समुपलभ्यते। विश्वेश्वरपण्डितः

उत्तरप्रदेशे कुमाऊँगढवालनामकप्रथितक्षेत्रे विद्यमानस्य अल्मोडानगरस्य पाटियानामके ग्रामे समुदपद्यत। अस्य पितुः नाम लक्ष्मीधर पाण्डेय आसीत्। पितुः वार्द्धक्ये काशीविश्वनाथस्य प्रसादेनायं जनिं लेभेऽतः विश्वेश्वर इत्याभिधानमभूत् दशवर्षदेशीय एवायं कवित्वशक्तिसम्पन्नोऽभवदिति लोकश्रुतिः। अस्याष्टमः पुरुषो देवेश्वर (चुन्नीलाल) नामा गङ्गातटसमीपगते "अनूपशहर" नाम्नि नगरे वर्तत इति काव्यमालायाः अष्टमभागे समुल्लिखितं वर्तते।

विश्वेश्वरपण्डितस्य समयः खृष्टीयाष्टादशशतकस्यारम्भः इति विदुषां धारणा। यद्यपि काव्यमालायाः अष्टमेभागेऽभिहितं यत् "चतुर्विंशद्देशीयश्चायं परलोकं जगाम" इति। तथापि डॉ० हीरालालशुक्लमहोदयेन स्वीये "आधुनिकसंस्कृतसाहित्य" नामके ग्रन्थे विश्वेश्वरस्य समयः अष्टादशशतक एव स्वीक्रियते। तथैव १७०८ ई०त० १७८८ ई० पर्यन्तमयमासीदित्युल्लिखति। अशीतिवर्षपर्यन्तं विश्वेश्वरः जीवित आसीदिति निश्चितमनेन। विश्वेश्वरपण्डितेन निर्मितं विपुलं ग्रन्थराशिमवलोक्य नूनमेव कथयितुं शक्यते यत् डॉ० हीरालालशुक्लमहोदयस्य मतं साध्वेव। काव्यमालाया अष्टमभागेऽभिहितस्य मूलं न वयमाकलयामः।

**पाण्डित्यम्—**

आधुनिकसंस्कृतसाहित्यस्य पोषकाणां मध्ये विश्वेश्वरपण्डितोऽयमद्वितीयः स्थास्यति। साहित्यशास्त्रे न्यायशास्त्रे चायमप्रतिहतगतिरवलोक्यते शब्दशास्त्रस्यापि प्रचुरं ज्ञानमस्य कृतिषु दृष्टिपथमवतरति। अनेन काव्यं नाटकमालोचनग्रन्थः टीकादयश्च निर्मिता इति दृष्टमस्माभिः। अस्य कृतिषु सर्वत्र पाण्डित्यं दृश्यते। श्लोकनिर्माणेऽयं नितरां दक्ष आसीत्। विश्वेश्वरस्य कवितासु सर्वत्र कल्पनायाः पदस्य च लालित्यं दृष्टिपथमवतरति।

यथा—

**रत्नावलीविविधकान्तिकदम्बकेन**
**चापं पयोधरयुगे तव निर्मितं यत्।**
**कामस्य रुद्रविजयाय तदीयमौर्वी-**
**लेखेव रोमलतिका दयिते चकास्ति** ॥३३॥

यथैष पद्यानां निर्माणे कुशलस्तथैव गद्यस्य रचनायामपि निपुणतम आसीदयम्। तथाहि—

"नीवीमोक्षः सुरतोत्सवेषु न वणिक्षु। करपीड़ा सुन्दरीस्तनेषु न प्रजासु। अश्लीलभाषणमश्वमेधविधिषु रतप्रयोगेषु न सद्गोष्ठीषु"। इत्यादि गद्यं दर्शनीयतां याति। विश्वेश्वरपण्डितेन त्रयोविंशति कृतयः निर्मिताः। ताः हि डॉ० हीरालालशुक्लमहोदयस्यानुसारमिहोपस्थाप्यन्ते।

(१) लक्ष्मीविलासमहाकाव्यम्,
(२) रोमावलीशतकम्,
(३) वक्षोजशतकम्,
(४) होलिकाशतकम,
(५) ऋतुवर्णनम् (खण्डकाव्यम्),
(६) नवमालिका नाटिका,
(७) शृङ्गारमञ्जरी (सट्टिकम्),
(८) सिद्धान्तसुधानिधिः (दर्शनम्),
(९) काव्यरत्नम् (काव्यशास्त्रम्),
(१०) दीधितिप्रवेशः (न्यायः),
(११) तर्ककुतूहलम् (न्यायः),
(१२) आर्यासप्तशत्याः व्याख्या,
(१३) कवीन्द्रकण्ठाभरणम्–चतुः सर्गीयं काव्यम् (सटीकम्),
(१४) काव्यतिलकम् (सटीकम्),
(१५) नैषधीयचरितमहाकाव्यस्य-व्याख्या,
(१६) मन्दारमञ्जर्याः टीका,
(१७) रसचन्द्रिकायाटीका,
(१८) रसमञ्जर्याःटीका,
(१९) अलङ्कारमुक्तावली,
(२०) अलङ्कारकौस्तुभम् (सटीकम्),
(२१) आर्याशतकम्,
(२२) रुक्मिणीपरिणयम् (नाटकम्),
(२३) मन्दारमञ्जरी (गद्यकाव्यम्),

आधुनिकसंस्कृतसाहित्यशास्त्रे पण्डितराज जगन्नाथानन्तरं विश्वेश्वरपण्डितोऽद्वितीयः साहित्यशास्त्रसमालोचकोऽभूत्। अलङ्कारकौस्तुभप्रभृत्यलङ्कारशास्त्रीयग्रन्थेषु विश्वेश्वर पण्डितस्य साहित्यविषयकं प्रगाढं पाण्डित्यं विद्योतते।

**टीका-परिचयः–**

विश्वेश्वरपण्डितस्य समञ्जसार्था टीका विशालकाया वर्तते। वाराणसीनगरस्य काशीहिन्दूविश्वविद्यालस्य मातृकागारे[१] प्रतिलिपिरस्याः शताधिकसप्तत्रिंशत् पत्रमिता वर्तते। वरोडा ओरिएण्टल इन्स्टिच्यूट मातृकागारे विद्यामानास्याः मातृका[२] शताधिक षड्विंशतिपत्रमितास्ति। नाद्यावध्येषा टीका प्रकाशमागता। अत्र टीकायां व्याख्याकृतः पाण्डित्यस्य मौलिकचिन्तनस्य गहनाध्ययनस्य च परिपाक उपलभ्यते। एवमन्यकृतिष्वपि स्यादेवेति स्थालीपुलाकन्यायेन वक्तुं शक्यम्। सर्वत्र पण्डितप्रवरस्य विश्वेश्वरस्य न्यायव्याकरणसाहित्यप्रभृतिशास्त्राणां प्रभावः दरीदृश्यते।

रसमञ्जरीग्रन्थस्य लक्षणोदाहरणानामवबोधनार्थम् प्रयतमानोऽयं सरलां माधुर्यगुणयुतां च भाषां प्रयुङ्क्ते तथापि परिष्कारावसरे नव्यन्यायस्य रीतिमनुसरति। यथा–

वस्तुतस्तु इदं किमुत्पलमित्येव नायिकाभ्रान्तिः।

...... तथा चेदं किमुत्पलमिति भ्रमे तज्जिज्ञासायां सत्यां उत्पलत्वव्याप्यस्पर्शविशेषसाक्षात्कारार्थं कर्णावतंसोत्पले करस्पर्शं कृत्वा सविशेषोऽत्रास्ति न वेति निर्णयाय श्रवणसीम्निस्फुरतोः नेत्रयोरुपरि करव्यापार" इति भावः इति[३]।

एवं–"स्वविषयवृत्तिभेदप्रतियोगितावच्छेदकधर्मासमानाधिकरणविषयत्ववद् रसिकत्वम् अनुकूलत्वमिति तात्पर्यम् इति[४]।

यथा च–अयं चात्र प्राचामभिप्रायः परकीयाया मानसत्वेऽपि नायकस्य नायिकान्तर-संयोगमभ्युपगम्येव तत्रानुरक्तस्य न भेदप्रयोजकत्वमिति। नवीनानां त्वयमेवाशयः। तत्रापि तद्भेदानुपपत्तिः नायिकान्तरसंयोगस्य कादाचित्कतया निमित्तत्वोपपत्तेः[५]।

---

१- अधिग्रहण संख्या–टीकानाम–टीकाकृन्नाम–पत्र सं० ११/६८१३-सी ४७५२ रसमञ्जरी समञ्जसार्था विश्वेश्वर पण्डित १३७

२- १८४/१२६२ समञ्जसार्था १२६

३- श्लोक ५ व्याख्या

४- अनुकूलनायकलक्षणनिरूपण

५- श्लोक द्वादशसंख्यामितस्य व्याख्या

विश्वेश्वरेण पदव्युत्पत्तिप्रसङ्गे व्याकरणस्य सूत्राणि प्रक्रियाश्च यथायथमुपायोजिषत, यथा– चञ्चद्बृहतोरुपसंख्यानम् (५-४-३) इति वार्तिकव्याख्यायाम्[1] अचञ्चनमपि यश्चञ्चन्निव लक्ष्यत इति केयटोक्तरीत्या चञ्चतेश्चलनार्थत्वमिति निर्दिशत्ययम्।

यद्यपि व्युत्पत्तिः क्लिष्टतामभिवर्धयति तथापि वैदुष्यमपि वर्धयति। यथा– "अम्बुजपदं सूर्यविकासिपरम्। कुमदपदं चन्द्रविकासिपरम्। तुल्यार्थैरतुलोपमाभ्यामिति तृतीया। प्रतियोगित्वं तदर्थः। सादृश्यम् उपपूर्वकमाधात्वर्थः। अनुपयोगित्वं यत् प्रत्ययार्थः। तदुभयप्रतियोगिक-सादृश्यमानाश्रय इति फलितार्थः इति[2]।

कुत्रापि नास्य पाण्डित्यप्रदर्शनलालसा दृश्यते। अपितु मौलिकचिन्तनस्यानायासमभिव्यक्तिरनेन क्रियते। अतएवाशयस्य वैशद्यं वाचकानानन्दयति। यथा– "विज्ञानेश्वरस्त्वाह–पुरुषसम्भोगवृत्तिः वेश्येति। पुरुषसम्भोग एव यस्याः धनागमहेतुरिति तल्लक्षणार्थः स्वीयायां तु भार्यात्वमात्रेण भर्तृद्रव्ये स्वत्वोत्पत्या नातिव्याप्तिः इति।

कामशास्त्रेप्यस्याप्रतिहतागतिरासीदिति परिज्ञायते। तद्यथा– "क्वचित्तु आदौ रतं बाह्यमिति कामशास्त्रम् पूर्वमालिङ्गनौचित्यात्। शास्त्राणां विषयस्तावद् यावन्मन्दरसो नरः रतिचक्रे प्रवृत्ते तु न च शास्त्रं न च क्रमः। इति[3]। अपि च रोमावली शतकम्, वक्षोजशतकम्, शृङ्गारमञ्जरीति कृतित्रये पण्डितप्रवरस्य कामशास्त्रीयपरिचयः परिज्ञायते।

निष्कर्षतया पण्डितविश्वेश्वरस्य समञ्जसार्था टीका जिज्ञासूनां विद्वज्जनानां च कृते तुल्यरूपेण तुष्टिकरी परमनधीतन्यायशास्त्राणामत्र नास्ति सुगमः प्रवेशः।

८. **टीकानाम – प्रकाशः**

**टीकाकृन्नाम – नागेशभट्टः**

प्रकाशटीकाकारस्य प्रथितवैयाकरणस्य नागेशभट्टस्य देशकालादिकमधिकृत्य विदुषां न विवादः। अयं हि भट्टमहाभागः महाराष्ट्रीयः ब्राह्मण आसीत्। नागेशभट्टस्योपनाम काले इत्यप्यासीदतो महाराष्ट्रीयपरम्परानुसारमस्य नाम नागेशशिवभट्ट काले इति भवति[4]। नागेशभट्टेन वाराणस्यामेवाध्ययनमध्यापनं

१- श्लोकसंख्या - १६ व्याख्या
२- श्लोकसंख्या - ८० व्याख्या
३- श्लोकसंख्या - १० व्याख्या
४- काशी की पण्डित परम्परा - पृ० ६२

ग्रन्थनिर्माणं च विहितम्। अयं भट्टोजिदीक्षितपौत्रस्य भानुजिदीक्षितात्मजस्य पण्डितप्रवरस्य हरिदीक्षितस्य प्रमुखः शिष्य आसीत्। प्रयागस्य समीपेष्ववस्थितस्य शृङ्गवेरपुरस्य (वर्तमान सिङ्गरौर) शासकस्याश्रयेऽयं जीवनयापनमकरोत्।

अस्योल्लेखोऽनेन स्वयं विहितोऽस्ति–

**भट्टोजिदीक्षितस्य प्रौढमनोरमायाः शब्दरत्नाभिधायां स्वीयटीकायाम्**
**याचकानां कल्पतरोररिकक्षहुताशनात्।**
**शृङ्गवेरपुराधीशात् रामतो लब्धजीविकः इति।**

तस्मात् नागेशभट्टः वाराणस्यां शृङ्गवेरपुरे च जीवनमयापयत्। को विदेशो मनस्विनामिति चरितार्थयन्नयं महाराष्ट्रदेशोद्भवोऽप्युत्तरप्रदेशं कर्मक्षेत्रतया पर्यगृह्णात्। नागेशभट्टस्य समयविस्मयेऽपि स्फुटप्रमाणोपलब्ध्या नास्ति शङ्कावसरः[1]। सप्तदशशतकस्यान्तिमतुर्यांशतोऽष्टादशशतकस्य खृष्टीयस्य पूर्वार्धं यावदस्य समयो विद्वद्भिः सप्रमाण एवाधारितः। वार्धक्ये नागेशभट्टेन क्षेत्रसंन्यासः परिगृहीत आसीत् । अतएव जयपुरनगरसंस्थापकस्य महाराजजयसिंहस्य विश्रुतेऽश्वमेधयज्ञे सादरमाहूतोऽपि नायं तत्रागच्छत् स चाश्वमेधमखः विक्रमाब्दस्य १७९९ ईसवीये वर्षे आषाढशुक्लद्वितीयायां सम्पन्नोऽभूदिति समुल्लिखितमस्ति। तस्मादस्य कालस्य विषये न कापि विमतिर्विद्यते।

**पाण्डित्यम्–**

नागेशभट्टस्य पाण्डित्यमद्वितीयमासीत्। अयं हि तन्त्रे-धर्मशास्त्रे-कर्मकाण्डे-साहित्ये-व्याकरणे च ग्रन्थान् निर्मितवान्। परं सर्वाधिकाख्यातिरनेन व्याकरणशास्त्रे लब्धा। यतो हि मुख्यतः नागेशभट्टः वैयाकरणः आसीत्। व्याकरणशास्त्रमधिकृत्यानेन लिखिताः ग्रन्थाः सन्ति प्रसिद्धाः प्रकाशिताः अध्ययननाध्यापनेषु प्रचलिताश्च। विद्वद्भिस्तेषु व्याख्या अपि प्रणीताः। तथा हि–

१. वैयाकरणसिद्धान्तमञ्जूषा, २. वैयाकरणलघुमञ्जूषा, ३. परमलघुमञ्जूषा, ४. महाभाष्यप्रदीपोद्योतश्च।

साहित्यविषयेऽपि काव्यप्रकाशस्य टीकादीनां निर्माणं नागेशभट्टस्य साहित्यविषये प्रौढिमभिव्यनक्ति।

**टीका-परिचयः–**

नागेशभट्टो हि रसमञ्जर्याः प्रकाशनाम्नीं टीकां व्यलिखत्।

---

१- काशी की पण्डित परम्परा - पृ० ६३

व्याकरणशास्त्रमधिकृत्य लेखने प्रकाशकारस्य यादृश्याः प्रतिभाया दर्शनं भवति नात्र वर्तते तादृशी प्रतिभा। टीकावलोकनेन प्रथमं तु शङ्केव समुत्पद्यते यत् किमेषा नूनं नागेशभट्टेन लिखिता अथवा कोऽपि लिखित्वा तन्नाम्ना तां प्राचारयत् इति। नागेशभट्टस्य प्रखरपाण्डित्याभिज्ञाः तस्येतरासां कृतीनामध्ययनेन प्राप्तपरिचयाः कदापि प्रकाशटीकाकारतया नागेशं स्वीकर्तुं नोत्सहन्ते। प्रकाशनाम्नी टीका सर्वथा नीरसा अस्पष्टा दृश्यते। प्रथमतस्तु टीकैषा लघुतमकलेवरा यथा–"समुपागतवति चैत्रे" इति श्लोकस्य (२७) व्याख्यायामिह–"समुपागतेति। अनुकम्प्या लता लतिका तालीदलेति सङ्केतभङ्ग्या उपैतीति भावः" इत्येतावन्मात्रमभिहितम्। उक्त्यानया नैव छात्रो न वा तज्ज्ञः सन्तोषमनुभवतीति विदितम्। एवं–प्रादुर्भूते नवजलधरे" इति श्लोकस्य (१२३) व्याख्यायां प्रादुरिति त्वत्पदमिति पाठः। नवजलधरे इति। दुःसहत्वेन नवता इति।

द्वितीयतस्तु साहित्यशास्त्रदृष्ट्या व्याकरणशास्त्रदृष्ट्यापि चैषा टीका भारभूतेव। यतो हि कस्यापि श्लोकस्य व्याख्यावसरे छन्दोऽलङ्कारध्वन्यादीनां निरूपणस्य का कथोल्लेखोऽपि न दृश्यते न वा व्याकरणशास्त्रसम्बन्धिनी व्युत्पत्तिरेव दृष्टिपथमवतरति फलतः ईदृशी विरसा असारा मानवताविहीना च टीका नागेशभट्टस्य भवितुं नार्हतीति आलोचनया वक्तुं शक्यते इति निष्कर्षः। व्याकरणसम्बन्धिन्याः व्युत्पत्तेरत्यन्ताभावोऽपि निष्कर्षममुं प्रसाधयत्येव। अतएव रसमञ्जरीमाश्रित्य लिखितासु टीकासु एषा पाण्डित्यदृष्ट्या, विषयदृष्ट्या, निरूपणदृष्ट्या प्रयोजनदृष्ट्या च निम्नतमैव सिध्यति।

## ९. टीकानाम – भानुभावप्रकाशिनी उत वा रसमञ्जरीविवृतिः

### टीकाकृन्नाम – महादेवः

भानुभावप्रकाशिनीकारस्य महादेवस्य देशकालादिके साधनानुपलब्ध्या न ज्ञायते। महादेवलिखितस्य रसमञ्जरीविवृतिटीकायाः एका मातृका वाराणसीनगरस्थसरस्वतीभवनमातृकागारे संरक्षिता वर्तते। सातीव लघुकलेवरा टिप्पणीकल्पैवास्ति। मातृका त्रयस्त्रिंशत्पत्रयुता वर्तते। प्रतिपृष्ठं पञ्चदशपङ्क्तयः। प्रतिपङ्क्ति, पञ्चदशवर्णाश्च सन्ति। डॉ० रामसुरेश त्रिपाठिमहाशयः रसमञ्जरीटीकानां क्रमिकोल्लेखावसरे नागेशभट्टव्रजराजदीक्षितयोरन्तराले महादेवं तत्कृतभानुभावप्रकाशिनीं चोल्लिखति। नागेशभट्टस्य समयः अष्टादशशतकस्य पूर्वार्धः स एव व्रजराजदीक्षितस्यापि समयः, अतः महादेवस्यापि समयः अष्टादशशतकस्य पूर्वार्ध एव आसीदित्यनुमीयते।

**१०. टीकानाम – रसिकरञ्जनम्**

**टीकाकृन्नाम – व्रजराजदीक्षितः**

रसिकरञ्जनकारस्य व्रजराजदीक्षितस्य देशकालादीनां विषये नाधिका सामग्री समुपलभ्यते। महाराष्ट्रीयश्रोत्रियकुले भारद्वाजगोत्रे समुत्पन्नोऽयं पश्चात् वाराणसीमध्यवसत् इति डॉ० वी० राघवन् महाशयः निरधारयत्।

व्रजराजदीक्षितस्य पुत्रेण जीवराजदीक्षितेन भानुदत्तमिश्रविरचितायाः रसतरङ्गिण्याः सेतु नाम्नी टीका लिखिता। यत्रैवंविधो वंशवृक्षः उपलभ्यते। "नरहरिबिन्दुपुरन्दर-सामराज-कामराज-व्रजराज-जीवराज", एष वंशः पाण्डित्ये सुप्रथितः आसीत्। व्रजराजदीक्षितस्य पितामहेन सामराजेन अक्षरगुम्फः श्रीधामचरितमिति कृतिद्वयं विलिखितम्। पी०वी० काणे महोदयानां मतानुसारं सामराजोपाख्येन श्यामराजेन "त्रिपुरसुन्दरीमानसपूजनस्तोत्रनामकस्य स्तुतिग्रन्थस्य रचना विहिता। यस्य प्रकाशनं निर्णयसागरमुद्रणालयतः मुम्बईतः काव्यमालायाः नवमे गुच्छके जातम्।

व्रजराजदीक्षितस्य पिता कामराजः दृश्यश्रव्यकाव्यनिर्माणकुशलः आसीत्। कामराजस्य षड्रचनाः प्राप्यन्ते।

१. सामराजस्य अक्षरगुम्फस्योपरि माला नाम्नी टीका,

२. काव्येन्दुप्रकाशः–षोडश अध्यायात्मकः,

३. चम्पकमञ्जरी नाटिका,

४. ध्रुवचरितम्,

५. नरहरिविजयं नाटकम्,

६. शृङ्गारकलिका त्रिशती,

एतदतिरिक्तं कीथमहाशयेन स्वीय–"संस्कृत ड्रामा[१]" नामके ग्रन्थे कामराजस्य कृतितया धूर्तनर्तकनामकस्य प्रहसनस्याप्युल्लेखः कृतोऽस्ति।

व्रजराजदीक्षितोपाख्यहरदत्तेन कृतिद्वयं विलिखितम्–

१. रसमञ्जर्याः रसिकरञ्जनं नाम टीका,

२. आर्यात्रिशती मुक्तकं च,

---

१- संस्कृत ड्रामा – कीथ - पृ० २६२-६३

व्रजराजस्य पुत्रेण जीवराजेनापि पूर्वजानां सरणिमनुसृत्य ग्रन्थनिर्माणं विहितम्। जीवराजस्य कृतित्रयं प्राप्यते।

१. गोपालचम्पूः

२. तर्ककारिका एवं तस्योपरि तर्कमञ्जरी नाम्नी टीका,

३. भानुदत्तस्य रसतरङ्गिण्याः सेतुटीका चेति।

इत्थं व्रजराजदीक्षितस्य जन्म पण्डितानां कुले जातम्। व्रजराजदीक्षितस्य समयविषये नास्त्यधिकविवादः।

१. व्रजराजदीक्षितस्य पितामहः सामराजः सप्तदशशतकस्योत्तरार्धे जीवितः आसीत्।

२. व्रजराजदीक्षितस्य पुत्रः जीवराजः स्वकीयायां सेतुटीकायां रसतरङ्गिण्याः टीकान्तरकारस्य गङ्गाधरः जडे इत्यभिधस्य तदीयायाः नौकाटीकायाश्चोल्लेखं करोति। नौका टीकायाः रचनाकालः १७४२ खृष्टाब्द आसीत्। अतः व्रजराजदीक्षितोऽप्यस्मिन्नेव समये समभवदिति निश्चीयते। प्रो० पी०वी० काणे महोदयः पूर्वोक्तमतं समर्थयति।

व्रजराजदीक्षितस्य रसिकरञ्जनटीकायाः कापि मातृका अद्यावधि मया नावलोकिता। प्रायः प्रथितेषु मातृकागारेषु रसिकरञ्जनटीका न प्राप्यते। मातृका सूचीग्रन्थेषु बृहन्मातृकासूचि ग्रन्थे च नास्त्यस्योल्लेखः। अतस्तस्याः विषये न किञ्चिदपि वक्तुं पार्यते। अस्यास्टीकायाः अतीवविरलः प्रचारोऽनुमीयते।

**११. टीकानाम – व्यङ्ग्यार्थदीपिका**

**टीकाकृन्नाम – आनन्दशर्मन्**

आनन्दशर्ममहाशयेन विरचितायाः व्यङ्ग्यार्थदीपिका टीकायाः विषये न कापि सामग्री प्राप्यते। डॉ० रामसुरेशत्रिपाठीमहाशयेनास्योल्लेखो विहितः। तियोडार अफरात् महाभागः कैटलागस् कैटलागरम् नामके ग्रन्थे आनन्दशर्मकृतव्यङ्ग्यार्थदीपिकामुल्लिखति[1]। यथा– "आनन्दशर्मन्–रसमञ्जरीटीका-व्यङ्ग्यार्थदीपिका सन् आफ त्रयम्बक–व्यङ्ग्यार्थकौमुदी रसमञ्जरीटीकाइन्डिया आफिस लाइब्रेरी–मा.स. १९ तदेव-६२ इति।

उपर्युक्तपंक्तिभिर्ज्ञायते यत् अनन्तपण्डितस्य व्यङ्ग्यार्थकौमुद्येव

१- कैटलागस् कैटलागरम् – पृ० ४६

भ्रमवशादानन्दशर्मणः व्यङ्ग्यार्थदीपिका नाम्नोद्धृता इति अस्य समर्थनमनेकप्रकारैर्भवति। प्रथमतः व्यङ्ग्यार्थदीपिकायाः न कापि प्रतिरद्यावधि सम्प्राप्ता। द्वितीयतः परवर्तिभिष्टीकाकारैः इतिहासकारैश्च आनन्दशर्मणः तत्कृताया व्यङ्ग्यार्थदीपिकायाश्च उल्लेखो न विहितः। तृतीयतः डॉ० वी० राघवन् महाशयेन न्यू कैटलागस् कैटलागरम् नामके बृहन्मातृकासूचिग्रन्थे बहवः आनन्दशर्माणः समुल्लिखिताः। परं तेषु न कोऽपि व्यङ्ग्यार्थदीपिकाकारः सिध्यति। उपर्युक्त-कारणैः सन्दिग्धत्वात् रसमञ्जर्याः टीकासु नास्य गणना क्रियते।

**१२. टीकानाम – अज्ञातम्**

**टीकाकृन्नाम – गिरिधरभट्टः**

गिरिधरभट्टस्य देशकालादीनां विषये न कापि सामग्री प्राप्यते। केवलमुद्धरणमितस्त्रिविक्रममिश्रविरचितायां रसामोदटीकायां प्राप्यते। तस्मादेव गिरिधरभट्टस्य रसमञ्जर्याष्टीका आसीदित्यवगम्यते। तथा च तत् "शृङ्गप्राधान्यसान्वोश्च" इत्यमरकोशात् शृङ्गप्राधान्यमियर्तीति शृङ्गारः। अतस्तदुपन्यसनं युक्तमेवेति गिरिधरभट्टः[1]। यथा च–

**रजनीसुरतेषु कामिनी न सुखं याति निसर्गतः काचित्।**
**दिवसे शिशुयोगतोऽपि सा विकसत्यम्बुजिनी यथारवेः॥**

इति कामतन्त्रशिक्षया सूर्योदयस्येष्टत्वादिति गिरिधरमहीधरभट्टौ समादधतुः तन्न इति[2]। यथा च "सुखशीर्षजलेषु कम् इति मेदिनीति गिरिधरभट्टः[3]।

उपर्युक्तपङ्क्तिभिः रसमञ्जर्याः गिरिधरभट्टस्य कापि टीका नूनमेवासीदित्यवगम्यते। परमद्यावध्यस्याः टीकायाः कापि मातृका न प्राप्ता। रसामोदकृता उद्धृतत्वात् गिरिधरभट्टस्य समयः षोडशसप्तदशशतकयोर्मध्ये सिध्यति।

**१३. टीकानाम – अज्ञातम्**

**टीकाकृन्नाम – महीधरभट्टः**

गिरिधरभट्टस्येव महीधरभट्टस्यापि देशकालादेः परिज्ञानाय साधनं न विद्यते। पूर्वोक्त –

---

१- रसमञ्जरी टीका रसामोद – पृ० १४
२- रसमञ्जरी टीका रसामोद – पृ० ५०
३- रसमञ्जरी टीका रसामोद – पृ० ३७

रजनीसुरतेषु कामिनी न सुखं याति निसर्गतः काचित्।
दिवसे शिशुयोगतोऽपि सा विकसत्यम्बुजिनी यथा रवेः।।

इति कामतन्त्रशिक्षया सूर्योदयस्येष्टत्वादिति गिरिधरमहीधर भट्टौ समादधतुः। तन्न 'इति' रसामोदकारस्य पंक्तिबलेन महीधरभट्टस्य रसमञ्जार्याः कापि टीका आसीदित्यवगम्यते। परमद्यावध्यस्याः न कापि मातृका दृष्टिपथमवतरिता। रसमञ्जरीमधिकृत्य लिखितानां टीकानां गणनावसरे डा० रामसुरेशत्रिपाठिमहाशयेन गिरिधरमहीधरभट्टयोरुल्लेखो विहितः।

१४. टीकानाम – रसामोदः

टीकाकृन्नाम – त्रिविक्रम मिश्रः

रसामोदकारस्य त्रिविक्रममिश्रस्य देशकालादीनां विषये स्पष्टं न किञ्चिदुपलभ्यते। त्रिविक्रममिश्रः आत्मानं रामकृष्णाश्रमनामकयतेः शिष्यं कथयति[1]। नाधिकं किमपि निर्दिशति परिचयार्थम्। अनेन परकीयानिरूपणावसरे अनन्तपण्डितस्य मतमुद्धृतम्[2]। येन रसमञ्जर्याः व्यङ्ग्यार्थकौमुदीनाम्न्याष्टीकायाः निर्माणं १६३६ मिते खृष्टाब्दे विहितमित्यनुमीयते। अयं बहुषु स्थलेषु शृङ्गारमञ्जरीलेखकस्याकवरशाहमहोदयस्य मतं पूर्वपक्षतयोद्धृत्य निराकरोति। शृङ्गारमञ्जरीकृतः समयः १६४५ खृष्टाब्दात् १६७५ खृष्टाब्दपर्यन्तमिति ज्ञायते। अन्यच्च रसामोदकारेण प्रकाशटीकाकारः नागेशभट्टः नोल्लिखितः। अतः उपर्युक्तविवेचनाधारेण रसामोदकारस्य समयः सप्तदशशतकस्योत्तरार्द्धः अष्टादश शतकस्य पूर्वार्द्धश्च सिद्ध्यति।

पाण्डित्यम्–

रसामोदकारोऽयं त्रिविक्रममिश्रः बहुशास्त्राभिज्ञ आसीत्। न केवलं साहित्यशास्त्रस्यापितु वेदान्तशास्त्रस्य व्याकरणशास्त्रस्य न्यायशास्त्रस्य कोषादीनां च सम्यगध्ययनं विहितमित्येतदीयटीकापरिशीलनेन ज्ञायते। रामकृष्णाश्रमनामकाद् गुरोरयम् वेदान्तशास्त्रमधीतवान्। वेदान्तशास्त्रस्य प्रभावादेवायं उदाहरणानामुभयपक्षे

---

१. श्रीरामकृष्णाश्रमपादपङ्कजप्रसादलब्धैकफलस्त्रिविक्रमः।
विद्वत्प्रसादाय च बालबुद्धये शृङ्गारपूर्वं तनुतेऽथ मञ्जरीम्।।
भानुप्रणीतमञ्जर्या भावसौरभमिच्छुभिः।
अस्मत्कृतरसामोद आघ्रेयः कृपया बुधैः।।
सरस्वतीभवनमातृकागारस्य पाण्डुलिपिः।

२. यस्तु अप्रकटो वित्तरहितो अनुराग इत्यनन्तभट्टीये तन्न।

शृङ्गारपक्षे शान्तपक्षे च संघटनमकरोत्। शृङ्गारपक्षे शृङ्गाररसस्यालम्बनतया नायिका निरूपिता। एवं शान्तपक्षे शान्तरसस्याङ्गतया मायाप्रकृतिरेव नायिकारूपेण निरूपिता। अत्र सभङ्गश्लेषकरणे टीकाकारस्यासाधारणं शब्दज्ञानं दृष्टिपथमवतरति। रसामोदकारः व्याकरणस्य सूत्रादीनां साहाय्येन व्युत्पत्तिं साधयति। अयमात्मनो मतस्य पोषणार्थं न केवलं पाणिनिव्याकरणस्यापितु चान्द्रकातन्त्रव्याकरणादीनां च सूत्राणि समुद्धरति। रसामोदकारस्य कोशज्ञानमपि सुविस्तृतं वर्तते। अतएवामरकोशस्य प्राचीनटीकाकाराः क्षीरस्वामिसर्वधरसुभूतिरायमुकुटप्रभृतयः उल्लिखिताः। इत्थं रसामोदकारस्य न्यायव्याकरणवेदान्तसाहित्यकोषादीनां पर्याप्तज्ञानमासीदिति प्रतीयते। अलङ्काराणां प्रदर्शने नाधिकमयमाग्रहशीलः। रसामोदस्य भाषा सरला सुबोधा च वर्तते॥

शृङ्गारपक्षापेक्षया मायापक्षनिरूपणम् प्रचुरतया भङ्गश्लेषयोगेन जटिलं सञ्जातम्। शृङ्गारमञ्जरीकारः रसमञ्जरीकृतः सिद्धान्तं निरस्यति। अयं तु शृङ्गारमञ्जरीकारस्य मतमपाकुर्वन् भानुदत्तमतं संरक्षति। अतोऽत्र भाषा नाधिकं सरला सुवोधा वा संजाता। अन्यत्र तु भाषा सरला सुबोधा गतिशीला च दृश्यते। टीकेयं नायिकानिरूपणपर्यन्तमेवोपलभ्यते। अनेन ज्ञायते यत् टीकाकारस्य उभयपक्षे नायिकाभेदनिरूपणमेवाभीष्टमासीत्। अथवा लिखितमपि कालकवलितमभवत्। हेत्वन्तरतः लिखितेव नहि व्याख्याग्रिमांशस्येति सम्भवति।

रसामोदकृत् शृङ्गारमञ्जरीकारस्य मतानां निराकरणावसरे बलवतः प्रमाणस्य सबलाया अनुभवसिद्धायाश्च युक्तेरुपयोगमकरोदित्यस्य वैशिष्ट्यम् अतएवाकबरशाहस्य मौलिकमपि नायिकाविचारमयं दूषितवान्। अतोऽत्र शृङ्गारमञ्जरीमतालोचनमधिकं सञ्जातम्। उपसंहृतौ वक्तुं शक्यते यत् रसामोदटीकायां नायिकानायिकयोः विवेचनं शास्त्रीयं वैशद्येन विहितमिति दृष्टिपथमवतरति।

**१५. टीकानाम – रसमञ्जरीस्थूलतात्पर्यार्थः**

**टीकाकृन्नाम – अज्ञातम्**

लण्डननगरे स्थिते इण्डियाआफिसलाइब्रेरीमातृकागारे रसमञ्जर्याः स्थूलतात्पर्यार्थनाम्नी टीका संरक्षिता वर्तते[1]। यस्या उल्लेखः डॉ०

१. कैटलाग आफ संस्कृत मैनुस्क्रिप्ट्स–पार्ट-२ वाल्यूम-१, इण्डियाआफिसलाइब्रेरी–लन्दन। क्रम सं० १२३०

रामसुरेशत्रिपाठिमहोदयेनापि विहितः। अस्याः टीकायाः टीकाकर्तुः च विषये साधनानुपलब्ध्या न किञ्चिदपि ज्ञायते। अध्ययनेन प्रतीयते यदियं टीका टिप्पणीकल्पा तात्पर्यप्रकाशिका च।

**१६. टीकानाम – समञ्जसार्थदीपिका**

**टीकाकृन्नाम – अज्ञातम्**

तियोडारअफरात्महाशयः कैटलागस् कैटलगरम्[1] नामके ग्रन्थे रसमञ्जर्याः टीकानामुल्लेखावसरे समञ्जसार्थदीपिकानाम्नीं टीकामुल्लिखति। परं टीकाकारस्य टीकायाः वैशिष्ट्यस्य च विषये न किञ्चित्सूचयति। नाद्यावध्यस्याः टीकायाः टीकाकारस्य च विषये कापि सामग्री प्राप्ता। डॉ० रामसुरेशत्रिपाठिमहोदयेनाप्यस्याः टीकायाः नामोल्लेखमात्रं व्यधायि।

**१७. टीकानाम – सुरभिः**

**टीकाकृन्नाम – कविशेखरः पं० बदरीनाथझाशर्मा**

सुरभिकारः कविशेखरः पं. बदरीनाथझामहोदयः आधुनिकः। अयं हि मैथिलः महाकवेर्भानुदत्तस्यैव वंशजः १९७४ वि. दिवमगच्छत्। पं. बदरीनाथझामहोदयानां विषये तेषां "कविशेखरपुष्पाञ्जलिः नामकाभिनन्दनग्रन्थे पुष्कला सामग्री समुपलभ्यते।

सुरभिकारस्य जन्म १८९३ तमे खृष्टाब्दे जनवरीमासस्य द्वादशतमे दिनाङ्के मिथिलाप्रदेशान्तर्गतसरिसवनामकग्रामे जातम्। अस्य पितुर्नाम विद्यानाथः मातुश्चमायादेवीत्यासीत्। बाल्यादेव सुरभिकारस्य संस्कृताध्ययने रुचिरासीत्। सुरभिकृता महामहोपाध्यायचित्रधरमार्कण्डेयरविनाथजनार्दनविदेश्वरशर्मणामन्तेवासित्वमधिगत्य विद्या समुपार्जिता। श्रीमतामध्ययनादीनां विषये डॉ० त्रिलोकनाथमहोदयेनोक्तम् "खृष्टीय १९०७ वर्षतः १९१५ वर्षपर्यन्तमधीत्य पाणिनीयव्याकरणे (१९१३) काव्ये च तीर्थपरीक्षां, मीमांसायां (१९०९) सांख्ययोगे (१९१४) न्याये (१९१५) च मध्यमापरीक्षां कलकत्ता नगरस्थ संस्कृतपरीक्षासमितेरुत्तीर्य शिक्षासमावर्तनं व्यदधात्। १९७३ मिते विक्रमाब्दे च दरभङ्गा राज्यस्य प्रसिद्धतमायां कठिनतमायां च धौतपरीक्षायां व्याकरणशास्त्रे सर्वप्रथमो जातः। पञ्चवर्षानन्तरं संस्कृतकाव्यनिर्माणप्रवीणोऽयं काशीस्थ भारतधर्ममहामण्डलेन कविशेखरेत्युपाधिना विभूषितः। १९६६ मिते विक्रमवर्षे

---

१. कैटलागस् कैटलगरम् – पृ० ४९५

सुरभारतीसाहित्यपारदृश्वा अयोध्यास्थसंस्कृतविद्वत्समित्या साहित्यार्णवाख्योपाधिना सभाजितः। महामहोपाध्यायोपाधिसमलङ्कृताः शिवकुमारमिश्रदुःखमोचनशर्म-कृष्णसिंहठक्कुरसुब्रह्मण्यशास्त्रिचित्रधरमिश्रपरमेश्वरशर्माणः युगपदेव सत्कुलसम्भूताय सच्चरित्राय चास्मै अधीतानधीतग्रन्थेष्वध्यापनकार्यनिर्वहणसामर्थ्ययोग्यतापत्रमर्पितवन्तः" इति।

उपर्युक्त विवेचनेन सुरभिकारस्य पाण्डित्ये गहनतमाध्ययने शङ्कावसरो नास्ति। सुरभिकृता मुज्जफरपुरस्थराजकीयधर्मसमाजसंस्कृतमहाविद्यालये साहित्यप्रधानाध्यापकत्वेन १९१७ मितस्य खृष्टाब्दस्य जनवरीमासस्य प्रथमदिवसादारभ्य १९४८ मिते खृष्टाब्दे जनवरीमासस्य द्वादशदिवसपर्य्यन्तम् अध्यापनकार्यं विहितम्। बदरीनाथझामहोदयस्य प्रायः षड्विंशतिकृतीनां विषये, कविशेखरपुष्पाञ्जल्याम् उल्लेखो विद्यते।

**मौलिक-ग्रन्थाः–**

१. प्रमोदलहरी (स्तोत्रम्) प्रकाशिता, रामेश्वर प्रेस, दरभङ्गा, १९११, श्लोक संख्या- ५३
२. राजस्थानप्रस्थानम् (खण्डकाव्यम्) प्रकाशितम्, राजप्रेस, दरभङ्गा, १९१५, श्लोक संख्या-२०५
३. भागवतप्रदीपः (भागवत समीक्षा) प्रकाशितः, विजयप्रेस, मुज्जफरपुर, १९३१ श्लोकसंख्या-१२६
४. राधापरिणयमहाकाव्यम्, प्रकाशितम्, वैशालीप्रेस, मुज्जफरपुर, १९३१, श्लोकसंख्या-२०४४
५. अन्योक्तिसाहस्री (काव्यम्) प्रकाशिता, वैशालीप्रेस, मुज्जफरपुर, १९३८, श्लोकसंख्या- १०००
६. काश्यपकुलप्रशस्तिः (खण्डकाव्यम्) प्रकाशिता, वैशालीप्रेस, मुज्जफरपुर, १९३८, श्लोकसंख्या-२५०
७. साहित्यमीमांसा (अलङ्कारशास्त्रीयालोचनम्) प्रकाशिता, ओरिएण्डलबुकएजेन्सी, पूना, १९३७, गंगानाथझाअभिनन्दनग्रन्थे
८. शोकश्लोकशतकम् (काव्यम्) प्रकाशितम्, दरभङ्गाप्रेसकम्पनी, १९५३, श्लोकसंख्या-१००
९. संस्कृतगीतरत्नावली (गीतम्) प्रकाशिता, मिथिलाप्रेस, दरभङ्गा, १९५४,

श्लोकसंख्या-१०१

१०. काव्यकल्लोलिनी (स्वरचितश्लोकसंग्रहः) सरस्वतीमुद्रणालये, मिथिलाविद्यापीठेन प्रकाश्यमाना

११. संस्कृतमैथिलीकोष (पटनाविश्वविद्यालये प्रकाश्यमानः) शब्दसं० ५५००

१२. गुणेश्वरचरितचम्पूः (राजप्रेस, दरभङ्गा १९५२) प्रकाशितः पृ०सं० २२८

१३. कार्तिकशुक्लद्वितीयानिर्णयः (धर्मशास्त्रम्) प्रकाशितः पृ० १६

१४. एकावलीपरिणयः (मिथिलाभाषामहाकाव्यम्) मास्टरप्रिंटिंग्प्रेस, काशी, प्रकाशितः राजप्रेस दरभङ्गा, १९४२, पद्य सं० १६२६

१५. काव्यविवेकः (मिथिलाभाषायां साहित्यग्रन्थः) अप्रकाशितः पटनाविश्वविद्यालये सुरक्षितः

**टीका-ग्रन्थाः–**

१. रसमञ्जरीसुरभिः (चौखम्बा-वाराणसी १९२९) पृ० २०८

२. ध्वन्यालोकदीधितिः (चौखम्बा-वाराणसी १९३७) पृ० ६७२

१. रसगङ्गाधरचन्द्रिका (चौखम्बा-वाराणसी १९५५) पृ० ३७४

**सम्पादित-ग्रन्थाः–**

१. रत्नपाणिविरचितैकोद्दिष्टसारिणी (गङ्गाप्रेस, सुल्तानगञ्ज, १९३१) पृ०सं० ३६

२. यदुनाथप्रणीतः व्यञ्जनावादः (वैशालीप्रेस, मुज्जफरपुर, १९३४) पृ०सं० ४०

३. भानुदत्तविरचितः रसपारिजातः (मोतीलालबनारसीदास, लाहौर, १९३९)

४. रामानन्दप्रणीता रसतरङ्गिणी–मिथिलासंस्कृतविद्यापीठेन प्रकाशिता

५. वेणीदत्तविरचितालङ्कारमञ्जरी–मिथिलासंस्कृतविद्यापीठेन प्रकाशिता

६. गोकुलनाथविरचितम् काव्यप्रकाशविवरणम्–वाराणसेयसंस्कृतविश्वविद्यालयेन प्रकाशितम्

७. मैथिलीगीतरत्नावली (समाजप्रेस, दरभङ्गा, १९५८) गीत सं० ११५

८. मैथिलीपद्यमाला (अप्रकाशिता) पद्य संख्या १००००

सुरभिकृता आजीवनं सुरभारत्याः समभ्यर्चनं विहितम्। महर्षिकल्पः एषः नूनमेवास्मिन्नन्धकारयुगे संस्कृतवाङ्मयस्य कृते भास्करतुल्यः। सहस्रेभ्योऽप्यधिकाश्छात्राः कृतविद्यतां गताः भारतस्य विविधेषु प्रान्तेषु निवसन्तोऽध्यापयन्तश्च कीर्तिमस्याक्षुण्णामुद्द्योतयन्ति। न केवलमयं कविरपित्वालोचकोऽपि, काव्ये काव्यशास्त्रे चास्य स्वाभाविक एव वर्तते पटिमा।

**टीका-परिचयः–**

टीकालेखने सुरभिकारः सिद्धहस्त इत्यत्र नास्ति विमतिः कस्यापि। यतः रसमञ्जर्याः सुरभिटीका, रसगङ्गाधरस्य चन्द्रिकाटीका, ध्वन्यालोकस्य दीधितिटीका च टीकाकारस्य पाण्डित्यं टीकालेखनकौशलं च द्योतयन्ति। उपर्युक्तटीकात्रयं विद्वत्समाजे ससम्मानमाद्रियते। रसमञ्जर्याः अद्यावधि प्रकाशितासु टीकासु सुरभिटीका छात्रानध्येतृजनांश्चाधिकमुपकरोति। अस्याः भाषा सरला सरसा सारयुता प्रमाणलक्षणाद्यलङ्कृता च वर्तते। अत्र प्रथममुदाहरणादीनां व्याख्या विहिता। तदनन्तरं व्याकरणकोषादीनामुल्लेखो विहितः। तत्पश्चादुदाहरणगतशब्दानां व्यञ्जकता प्रतिपादिता। अन्ते चालङ्कारच्छन्दआदीनां निरूपणं विहितम्। ग्रन्थारम्भादारभ्य ग्रन्थसमाप्तिपर्यन्तं सर्वत्र सैव सरणिरप्रतिहता दृष्टिपथमवतरति। सर्वत्र टीकाकारस्य नायकनायिकाविषयगहनमध्ययनं मौलिकचिन्तनं च दृश्यते। व्यञ्जकशब्दानां निरूपणमतीव रमणीयं वर्तते। अनेनोदाहरणश्लोकानामभिप्रायः विशदमुपपादितः। व्यञ्जकशब्दानां निरूपणावसरे टीकाकारस्य भाषा प्रवाहमयी सहजा च वर्तते। दुरुहतायाः अत्र दर्शनं न भवति। तथा हि एकत्राभिहितमनेन–

"अत्र पथिकत्वेन आवासदेशोचिती सुलभशीतत्वस्रोतस्विनीकूलावासशीलं, सततपरिभ्रमणपरायणतया पाणिगृहीतीचिरविरहात् रिरंसौचित्यं, सवितुः तीव्रत्वेन सहजशीतल-नदीकूलनिवासौचित्यं, तमालत्वेन नैसर्गिककार्ष्ण्यद्वारा अन्तःस्थलस्य तिमिराच्छन्नता, निविडतमतया तददतिशयः------अद्यत्यनेन अद्यतन निवासस्यावश्यविधेयताद्वारा रागातिरेकः ध्वन्यते"। इति

वृत्तालङ्कारादीनां निरूपणावसरे समुचितस्थलेषु परिमलरसामोदकारयोरलङ्कारविषयकं मतं विविच्यानेन दूषितम्। अन्येषामाचार्याणां पूर्ववर्तिनां टीकाकाराणां चेहानावश्यकं खण्डनं नोपलभ्यते। परिमलरसामोदकारयोरलङ्कारप्रसङ्गेऽपि शालीनता न परित्यक्ता। यद्यपि टीकायां सर्वत्र टीकाकारस्य पाण्डित्यं शब्दान्वेषणकौशलं च दर्शनीयतां याति, तथापि पाण्डित्यप्रदर्शनलालसायाः अत्राभाव एव दृश्यते। नूनमेव

रसमञ्जरीटीकासु सुरभिटीकायाः महत्त्वपूर्णं स्थानं वर्तते। सुरभिटीकायाः रचना १८४८ शकाब्दे जाता। उक्तं च सुरभिकृता–

**वसुवेदनागभूमितशाकाब्दे भारतीकृपया**

**पौषकुहूराशिदिवसे विवृतिरियं पूर्णतां नीता॥ इति।**

**१८. हिन्दी व्याख्या नाम–सुषमा**

**व्याख्याकृन्नाम – डॉ० जगन्नाथ पाठकः**

संस्कृतसाहित्यक्षेत्रे वर्तमानसमये विद्यमानेषु काव्यकर्तृषु डॉ० जगन्नाथपाठक-महोदयाः अन्यतमाः। श्रीमतां जन्म बिहारप्रान्तान्तर्गतरोहतासजनपदीय सहसरामनगरे विप्रान्वये जनवरीमासस्य द्वितीये दिवसे चतुस्त्रिंशदधिकैकोनविंशतितमे शतके ख्रिष्टाब्दे जातम्। श्रीमतां पितुर्नाम पं० विश्वनाथपाठकः मातुश्च श्रीमती सुरतादेवीति।

श्रीमद्भिः कृता भानुदत्तस्य रसमञ्जर्याः सुषमा नाम्नी हिन्दी व्याख्या १९५८ मिते ख्रिष्टाब्दे प्रकाशमागच्छत्। अस्याः प्रकाशनं चौखम्बा वाराणसीतोऽभवत्। रसमञ्जर्याः हिन्दीभाषायां श्रीमतां व्याख्यां विहाय न कापि कृतिरद्यावधि दृष्टिपथमागता। प्रस्तुता व्याख्या सरसा सरला प्रौढविचारैरलङ्कृता च वर्तते। सुकुमारमतीनां प्राचीनपरम्परागतप्रक्रियया अनधीतसंस्कृतानां छात्राणां कृते रसमञ्जर्याः एषा व्याख्या अतीवोपयोगिनी वर्तते। प्रायः बहुषु स्थलेषु व्याख्याकृद्भिरेभिः रसमञ्जरीकारस्याशयः स्फुटं प्रतिपादितः। शृङ्गारमञ्जरीकारस्य बडेसाहब अकबर महोदयस्य मतनिरूपणमपि यथास्थानं विहितम्।

समासतः एषा व्याख्या प्रौढा छात्रोपयोगिनी च वर्तते।

## मातृकाविवरणम्

बुधवरेणइन्द्रदत्तोपाध्यायेन विचरचितायाः रसमञ्जरीटीकायास्तिस्रः पाण्डुलिपयो मया गंगानाथझाकेन्द्रीयसंस्कृतविद्यापीठस्य संग्रहालयेऽधिगताः। तत्र 'क' मातृका पूर्णा एवं 'ख' मातृकापि पूर्णा एव। किन्तु 'ग' मातृका अपूर्णा वर्तते। एतासां मातृकाणां विवरणम् अधोलिखितमस्ति।

**'क' मातृकाः संख्या–** ४७४४९

ग्रन्थनाम – रसमञ्जरी।

ग्रन्थकारः – भानुदत्तः

टीकानाम – रसमञ्जरीटीका

टीकाकारः – इन्द्रदत्तः,

विषयः – साहित्यम्

पत्रसंख्या – १-२८

आकारः – ३५×१४.५ से०मी०;

प्रतिपृष्ठं पंक्तिसंख्या – ११

प्रतिपंक्ति वर्णसंख्या – ५७

लिपिः – देवनागरी,

आधारः – कर्गजपत्रम्

विवरणम् – पूर्णम्

स्थितिः – समीचीना

लिपिकालः – संवत् १८९१

**ग्रन्थस्य आदिवाक्यम्–**

आत्मीयं चरणं दधाति पुरतो निम्नोन्नतायां भुवि

स्वीयेनैव करेण कर्षति तरोः पुष्पं श्रमाशङ्कया

तल्पे किञ्च मृगत्वचा विरचिते निद्राति भागैर्निजै-

रन्तः प्रेमभरालसां प्रियतमामङ्के दधानो हरः।

**पुष्पिकावाक्यानिः**–इति श्रीमदुपाध्यायमोहनलालस्तस्यपुत्रः श्रीमदुपाध्याय

लालमणिस्तस्यसूनुना श्रीन्द्रदत्तेन कृता "रसमञ्जरीटीका समाप्तिमगात्। श्रीकृष्णाय नमः। संवत् १८९१"

**(ख) मातृका-संख्या – ४७४१५**

ग्रन्थनाम – रसमञ्जरी

ग्रन्थकारः – भानुदत्तः

टीकानाम – रसमञ्जरीटीका

टीकाकारः – इन्द्रदत्तः,

विषयः – साहित्यम्

पत्रसंख्या – १-२८

आकारः – ३२.५×१३.५ से०मी०;

प्रतिपृष्ठं पंक्तिसंख्या – १२

प्रतिपंक्ति वर्णसंख्या – ५६

लिपिः – देवनागरी,

आधारः – कर्गजपत्रम्

विवरणम् – पूर्णम्

स्थितिः – समीचीना

लिपिकालः – संवत् १८९१

**ग्रन्थस्य आदिवाक्यम्–**

श्रीगणेशाय नमः।

पुर इव परिस्फुरन् यो हृदिवप्रविशन्निवाङ्गमालिङ्गन्

ब्रह्मयुगन्यत्श्यन्निव रसइव युवते हरिर्जयति.....

**पुष्पिकावाक्यानिः–**

इति श्रीमदुपाध्यायमोहनलालस्तस्यपुत्रः श्रीमदुपाध्याय लालमणिस्तस्य सूनुना श्रीन्द्रदत्तेन कृता "रसमञ्जरीटीकाख्यो ग्रन्थः समाप्तिमगात्। श्रीकृष्णाय नमः। संवत् १८९१"

**(ग) मातृका संख्या – ४७४५२**

ग्रन्थनाम – रसमञ्जरी

ग्रन्थकारः – भानुदत्तः

टीकानाम – रसमञ्जरीटीका

टीकाकारः – इन्द्रदत्तः,

विषयः – साहित्यम्

पत्रसंख्या – १-६

आकारः – ३३.५×१४.५ से०मी०;

प्रतिपृष्ठं पंक्तिसंख्या – १३

प्रतिपंक्ति वर्णसंख्या – ५७

लिपिः – देवनागरी,

आधारः – कर्गजपत्रम्

विवरणम् – अपूर्णम्

स्थितिः – समीचीना

लिपिकालः – .........

**ग्रन्थस्य आदिवाक्यम्–**

श्रीगणेशाय नमः।

पुर इव परिस्फुरन् यो हृदिवप्रविशन्निवाङ्गमालिङ्गन्.....

**पुष्पिकावाक्यानिः–**

अन्ते प्रेमविरह विदित कान्तोविज्ञायतस्माद्दिग्देशादे–

त्यागत्य पुनरपि मे मह्यं वसु द्रव्यं दास्यतीति हेतोः..............

## उपसंहारः

षोडशशताब्द्यां महाकविभानुदत्तविरचितस्य रसमञ्जरीत्याख्यस्य, काव्यजगतो ग्रन्थरत्नस्य विविधासु टीकासु सतीष्वपि प्रकृतटीकाकर्त्रा विदुषा इन्द्रदत्तेन 'रसमञ्जरीटीका' नाम्नी टीका सरला सुबोधा पाण्डित्यपूर्णा प्रस्तुता। अन्यासां सर्वासामुपलब्धानां टीकानां टीकाकाराणां च परिचयोऽस्माभिः पूर्वमेव व्यलेखि।

नायिकाभेदविषयायां रसमञ्जर्यामादौ अर्धनारीश्वरशिवस्याभूतपूर्ववर्णनात्मकं मङ्गलाचरणं विधाय भानुदत्तो मुग्धा, अज्ञातयौवना, ज्ञातयौवना, नवोढा, विश्रब्धनवोढेत्यादिनायिकाभेदानां लक्षणोदाहरणानि अष्टात्रिंशत्श्लोकेषु ग्रथितानि, ते च सर्वे श्लोकाः कवेः स्वोपज्ञनिर्मिता एव विविधेषु छन्दःसु सन्ति। परं केचन श्लोकास्तस्य तातचरणानां सन्ति येषामुल्लेखस्तेन स्वयं कृतः।

किन्तु कविनिर्मितानां श्लोकानां यथार्थभावप्रकाशनं टीकाकाराणां पक्षे समायाति। अत्रैव टीकाकाराणां ज्ञानं प्रतिभा च परीक्ष्येते। अस्मन्मते रसमञ्जर्याष्टीकाकार इन्द्रदत्तः सफलोऽस्ति व्याख्याकरणे। स्थालीपुलाकन्यायेन द्वित्राणां श्लोकानामिन्द्रदत्तकृता व्याख्या द्रष्टव्या। प्रथमश्लोकस्य, तृतीयश्लोकस्य अन्येषां वा श्लोकानां व्याख्यां स्वैरं पश्यन्तु सुधियः। तथ्यमतथ्यं वा स्वयं प्रकाशमागमिष्यति।

कालिदासीयग्रन्थानां प्रसिद्धटीकाकारो विद्वन्मान्यो मल्लिनाथो व्यलिखत्–'नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते'। अस्य नियमस्य मल्लिनाथ इव इन्द्रदत्तोऽपि सम्यक् परिपालनं कृतवान्। स इवायमपि स्वटीकायां व्याकारणकोशादीन् साधु प्रायुङ्क्त। अतएव कथयितुं शक्यते यदेषा 'रसमञ्जरीटीका' विद्वन्मनोरञ्जिनी छात्राणां हितकारिणी चावश्यमास्ते। शुभमस्तु पाठकानाम्।

**डॉ० रमेशचन्द्र होता**

**गुरुपूर्णिमा २००१ ई०**

# भानुदत्त-विरचिता
# रसमञ्जरी
## इन्द्रदत्त-कृतया टीकया संवलिता

आत्मीयं चरणं दधाति पुरतो निम्नोन्नतायां भुवि
स्वीयेनैव करेण कर्षति तरोः पुष्पं श्रमाशङ्कया।
तल्पे किञ्च मृगत्वचा विरचिते निद्राति भागैर्निजै-
रन्तः प्रेमभरालसां प्रियतमामङ्के दधानो हरः ॥१॥

श्री[1]गणेशाय नमः
पुर इव परिस्फुरन् यो हृदि वप्रविशन्निवाङ्गमालिङ्गन्
ब्रह्मयुगन्यत्पश्यन्नि[2]व रसइव युवते हरिर्जयति[3]
कविकुलचूडामणिरिहलालमणेरिन्द्रदत्तनामाभूत्
वचनैर्विदुषां रुचये रचये रसमञ्जरीवृन्तम्[4]
प्रारीप्सितस्य ग्रन्थस्य विघ्नविघाताय कृतं
हरस्य नतिरूपं वस्तुनिर्देशरूपं वा मङ्गलं शिष्यशिक्षार्थं[5] निवध्नाति।

**आत्मीयमित्यादि**। प्रियतमामङ्के दधानो हरोनम्यतेऽस्तीति वा शेषः।
नन्वनेकनायिकाभावात्तमपोऽनुपपत्ति नित्याशङ्काहरनिरूपित प्रियतमत्वमुपपादयति।
आत्मीयमित्यादित्रिभिः पादैः निम्नोन्नतायां उच्चावचभूतायां भुवि आत्मीयं[6] न तु देव्यधीनं चरणं पुरतोऽग्रे दधाति न्यस्यति। पुनस्तरोः पुष्पं स्वीयेनैव न तु देव्यधीनेन करेण दक्षिणेन श्रमस्य आ ईषदपि शङ्कातया हेतुनाकर्षति। एकपुष्पत्रोटनाय देव्या मनसोपि श्रमो मास्तु किं पुनर्हस्तादेरिति तद्भूषार्थं स्वयमाकृष्य ददातीत्यर्थः किं बहुना। मृगत्वचा स्वोत्तरीयभूतया विरचिततल्पे

---

१- श्री गणेशायनमः इति पाठः नास्ति – क
२- ब्रह्मयुगन्यत्पश्वैव – क
३- हविर्जयति – क
४- वृत्तम् – ख
५- शिक्षार्थे – क
६- आत्मीयं चरणं – ग

शय्यायां तत्रापि निजैर्भागैर्दक्षिणांशैस्तदपि निद्राति निद्राचरणमात्रं न तु स्वपिति अङ्गनादर्शनादित्यर्थः। एवं च शरीरादपि प्रेमाधिक्यात् प्रियतमत्वं नानुपन्न-मितिभावः। तर्हि स्वामित्यनुरागाभावात् स्वीयात्वङ्गमत आह। अन्तर्हृदि प्रेम्णोभरस्समूहस्तेनालसाम्। प्रेमविमोहान्नानुरागाभिव्यक्तिरित्यभिप्रायः। इहैवं वर्णनं स्वस्य रसवर्णने प्रौढिं ध्वनयितुम् ॥१॥

**विद्वत्कुलमनोभृङ्गरसव्यासङ्गहेतवे**

**एषा प्रकाश्यते श्रीमद्भानुना रसमञ्जरी ॥२॥**

अथ सप्रयोजनकं[१] ग्रन्थारम्भं प्रतिजानीते विद्वदित्यादि। विदुषां कुलानि तेषां मनांस्येव भृङ्गास्तेषां रसस्य व्यासङ्गः स्वादः पुष्टिर्वा तस्य हेतवे प्रयोजनाय। श्रीमद्भानुना तन्नामकेन एषा बुद्धिस्था[२] रसानां मञ्जरी[३] इव शृङ्गारादीनामाधारभूता तन्नामिका रचना प्रकाश्यतेऽन्तर्गतापि बहिः क्रियत इत्यर्थः॥२॥

**तत्र रसेषु शृङ्गारस्याभ्यर्हितत्वेन तदालम्बनविभावत्वेन**

**नायिका तावन्निरूप्यते।**

रसानामाधारभूतेत्युक्तं रसाश्च नव तत्र किमुपादेयमित्याकांक्षायां प्रथमोपात्तत्वात् श्रेष्ठत्वेन तस्यैवेहोपयोगाच्च शृङ्गार एवेत्याह तत्रेति। शृङ्गारस्तु नायिकानायकोभयनिष्ठस्तर्हि किन्निरूपणमादै युक्तमित्यपेक्षायामाह। तदिति तस्य शृङ्गारस्यालम्बनविभावोहेतुर्नायिकेवतत्वेनहेतुना "पूर्वंरक्ताभवेन्नारी पुमान्यश्चान्तदिङ्गितै" रितिक्रमेण च तावन्न पतिवल्लभं हर्षं रतिमिति[४] योगेन नायिका सा विवेचनीयेति घटनार्थः।

सा च त्रिविधा–स्वीया, परकीया, सामान्या चेति तत्र स्वामिन्येवानुरक्ता स्वीया। न च परिणीताया परगामिन्यामव्याप्तिः, अत्र[५] पतिव्रताया[६] एव लक्ष्यत्वात्। तस्याश्च परगामित्वात्[७] परकीयात्वमपि सम्भवति।

---

१- सप्रयोजकं – ग
२- बुद्धिस्थ – क
३- रसमञ्जरी – ग
४- हर्षितमिति इति पाठः – क
५- तत्र – ग
६- पतिव्रता एव –ग
७- परगामित्या –ग

कियती सेत्यत आह–त्रिविधेति। त्रयो भेदा अस्या इत्यक्षरार्थः[1]। विचित्र नानाचेष्टादिस्वभावादिति भावः। भेदं दर्शयितुं शुद्धे निर्णीते व्यभिचारितो निर्णेय इत्यभिप्रायात् क्रमेण गणयति स्वीयेत्यादि। क्रमप्राप्तत्वाद् व्याचष्टे। स्वस्यैश्वर्य्यं स्वामी सचेह परिणेता तस्मिन्नेवनापरिणेतर्य्यपि अनुरक्ता रत्यादिकृतप्रेमवती स्वीयापतिसम्बन्धिन्यत्वन्वर्थिकेत्यर्थः[2]। एवकार व्यावृतिं स्पष्टयति। न चेत्यादिना न नहीत्यर्थः।

अस्याश्चेष्टा–भर्तुः शुश्रूषा शीलसंरक्षण[3]मार्जवं क्षमा चेति[4]।

सा यथा–

**गतागतकुतूहलं[5] नयनयोरपाङ्गावधि**
**स्मितं कुलनतभ्रुवामधर एव विश्राम्यति।**
**वचः प्रियतमश्रुतेरतिथिरेव कोपक्रमः**
**कदाचिदपि चेत्तदा मनसि केवलं मज्जति ॥३॥**

तत्र स्वीयालक्षणे पतिव्रता उक्तरूपा लक्ष्यमुदाहरणमतः परकीयालक्ष्यमेवनातः कुतोव्याप्ति[6]रित्यक्षरार्थः। तदेवोपपादयति तस्या[7]श्चेति। शंकापरतया व्याख्यानं भट्टादिकृतं तु चिन्त्यम् एव कारेण शंकानुदयात्। लक्षणमुक्त्वा-वृत्तिमाह। शीलं सद्वृत्तं आर्जवम् कौटिल्यम्। लक्ष्यमाह। कुलेनतभ्रुवः कुलीना इत्यर्थः।

एतेन परकीया एता इत्यपास्तम्। तासां स्वीयानां नयनयोर्गतागतकुतूहलं व्याघू[8]र्णनक्रीडा कदाचिदपि नास्ति चेदस्ति तदा अपांगौ नेत्रप्रान्तौ तदव[9]ध्येव न तु [10]तावतिक्रम्य विक्षिपतीत्यर्थः। तथास्मितमीषदपि हासोऽधर एव विश्राम्यति न तु तमुल्लंघ्य बहिः प्रसरतीत्यर्थः। उभयत्र शीलरक्षणं व्यङ्ग्यम्। तथा वचः

---

१- इत्यक्षरार्थाः – ग
२- सम्बन्धनीत्यन्वर्थिके० – ग
३- शीलरक्षण० – ग
४- च० – ग
५- गतानुगतकुतूहलं० – क
६- व्यावृति० – ग
७- अस्या० – ग
८- व्यावर्णन० – क
९- तदवध्येव० – ग
१०- तावदतिक्रम्य० – ग

प्रियतमस्य श्रुतेरेकस्यातिथिरेव कर्णान्तमेव गच्छति। एतेनार्जवम्। यद्वातिथेर्मानापमानवद्वच[१]साऽपि तेन शुश्रूषा व्यज्यते। कोपस्य क्रमः आरम्भोऽपि कदाचिदपि नास्तिऽचेदस्ति तदा मनसि केवलं मज्जति विलीयते न पुनस्तत्कृत चेष्टादिः। इह क्षमा व्यज्यते ॥३॥

**स्वकीया च[२] त्रिविधा–मुग्धा, मध्या, प्रगल्भा च तत्राङ्कुरितयौवना मुग्धा।**

स्वीया चे ति। तेनोभेसमुच्चीयेते[३]। प्रत्येकं तास्त्रिविधाइत्यर्थः। दृश्यन्ते हि। विवाहात् पूर्वं नाटकादौ मालतीशकुन्तलासीतादौ मुग्धाद्यवस्था[४] परकीयात्वादयः। परकीयादिलक्षणं तु स्वीया लक्षणवन्नात्र स्फुटं प्रतीयते एतेनेयं व्यवस्था स्वीयायामेवेति भट्टादयः परास्ताः। परकीयादेरभावे बीजाभावाच्चेत्याहुः केचित्। नन्वस्याः[५] कथं भेदोऽत आह। अङ्कुरित ईषदुद्भूतः[६] युवावस्थाकृत कुचादिर्यस्याःसा। मुग्धा संशयादि विचिन्तनशीलेत्यर्थः सा च अज्ञातयौवना, ज्ञातयौवना च। सैव क्रमशो लज्जाभयपराधीनरतिर्नवोढा। सैव जातप्रश्रया विश्रब्ध नवोढा।

अज्ञातेति। न ज्ञातं[७]यौवनं जयेत्येव[८] (ययेत्येव) मादिरर्थः सैवेति। उक्तप्रकारवत्येव। ततो भेदार्थं लक्षणमाह क्रमशः पूर्वं लज्जैव ततो नायकदर्शनस्पर्शनादिना[९] भयं ताभ्यां पराधीना नायकाधीनारतिर्यस्या न तु रतौ क्षमेत्यर्थः। सैवेति। नवोढैव। जातः प्रश्रयो वल्लभो न मां पीडयिष्यतीत्येवं विश्वासो यस्याः। नवोढायास्तु विश्वासलेशोऽपिनास्तीतिभेद इति भावः।

अस्याश्चेष्टा – क्रिया, ह्रिया, मनोहरा, कोपे मार्द्दवम् नवभूषणे समीहा च।

---

१- ०मानायमानवद्वचनसोपि – ग
२- 'च' इति पाठः नास्ति –ग
३- समुच्चीयते – क
४- मुग्धाधवस्य – क
५- तत्वस्याः – क
६- ईषद्भूतः – ग ७- ज्ञात –ग
८- भयेत्येव –क, ख
९- दर्शनादिना – क, ख

मुग्धा यथा–

अज्ञप्तं किल कामदेवधरणीपालेन काले शुभे
वस्तुं वास्तुविधिं विधास्यति तनौ तारुण्यमेणीदृशः।
दृष्ट्या खञ्जनचातुरी मुखरुचा सौधाधरी माधुरी
वाचा किञ्च सुधासमुद्रलहरीलावण्यमामन्त्र्यते ।।४।।

वृत्तिमाह क्रियेति। क्रियाविषयकलज्जयेत्यक्षरार्थः[१]। मार्दवं अल्पानियता[२]स्वोक्तिमुदा-हरति। कामदेव एव धरणिपालोराजातेनाज्ञप्तमुपदिष्टं तारुण्यं कर्त्तृ शुभेकालएणीदृशोनायिकायास्तनौ देहे स्थातुं वास्तुविधिं गृहकृत्यं विधास्यतीतिहेतोः दृष्ट्या खञ्जरीटस्य चातुरी वैदग्ध्यं मुखरुचासौधाधरी चान्द्रमसी माधुरी पुनर्वाचासुधा समुद्रस्य लहरीतरङ्गस्तस्याः लावण्यं कौशलं[३] आमन्त्र्यते। ईषदभ्यस्यते। एवञ्चेषद्यौवनकृतविशेषो ध्वन्यते। इह खञ्जरीटस्य कालविशेष सञ्चारवत् कादाचित्कत्त्वेन सलज्जक्रियया[४] मनोहरत्वं सौधाधरीत्यनेन सर्वदा प्रसन्नतया कोपाभावत्वं समुद्रपदेन समर्यादतयाक्षमावत्वं लहरीत्यनेन नवसमीहा च ध्वन्यते ।।४।।

अज्ञातयौवना यथा–

नीरात्तीरमुपागता श्रवणयोः सीम्नि स्फुरन्नेत्रयोः
श्रोत्रे लग्नमिदं किमुत्पलमिति ज्ञातुं करं न्यस्यति
शैवालाङ्कुरशङ्कया शशिमुखी रोमावलीं प्रोञ्छति
श्रान्ताऽस्मीति मुहुः सखीमविदितश्रोणीभरा पृच्छति ।।५।।

सहचरीं प्रति सखीवाक्यमुदाहरति। नीरादिति। अहं श्रान्तास्मीतिमुहुस्सखीं पृच्छति उत्तरे तया दत्तेपि पुनः पुनर्मुग्धात्वादेव पृच्छतीत्यर्थः कीदृशी नीरात्तीरमुपसमीपमागतागन्तुमशक्नुवाना लहरीभिरेवानीतेऽतिनितम्बोद्गमः। श्रोत्रे स्फुरन् उत्पललग्नं किमिति ज्ञातुं श्रवणयोः सीम्नि करं न्यस्यति। इह नेत्रोद्गमः शैवालस्याङ्कुरस्तस्य शङ्कया रोमावलीं प्रोञ्छति इह रोमावल्युद्गमः[५] पुनर्नविदितः। श्रोण्या भारो यया सा इहाज्ञातत्वं स्फुटमेव ।।५।।

---

१- अक्षरार्थः – ग
२- अल्पापनेयता – ग
३- कौशल्यं – ग
४- क्रिया – क, ख
५- लोमावल्युद्गमः – ग

**ज्ञातयौवना यथा–**

**स्वयम्भूः शम्भुरम्भोजलोचने ! त्वत्पयोधरः**
**नखेन कस्य धन्यस्य चन्द्रचूडो भविष्यति ॥६॥**

हे अम्भोजलोचने ! स्वयम्भूः न तु प्रियकरवर्द्धितः शम्भुः सुखकरः ईदृशस्त्वत् पयोधरः कुचे रूढोऽयम्। कस्य नखेन कुचाग्रे अर्द्धचन्द्रइव नखक्षतं भविष्यतीति संख्यापृष्टे धन्यस्येत्युत्तरेण भाग्यवतोऽयं सुखकरो युक्तइति ज्ञातता व्यज्यते। यद्वाऽस्ययोधनो तस्येति योज्यम्। यद्वा कमलं स्वनेत्र तारतम्येन सम्भाव्यालोचयन्तीं प्रति सम्बोधनेन ज्ञातता तदा कस्य धन्यस्येत्युत्तरमेव ॥६॥

**नवोढा यथा–**

**हस्ते धृताऽपि शयने विनिवेशिताऽपि**
**क्रोडे कृताऽपि यतते बहिरेव गन्तुम् ।**
**जानीमहे नववधूरथ तस्य वश्या**
**यः पारदं स्थिरयितुं क्षमते करेण ॥७॥**

स्वोक्तिद्वयमुदाहरति। नववधूर्नवोढा तस्य वश्येति वयं जानीमहे। यः पारदं पारेति प्रसिद्धं करेण स्थिरयितुं क्षमते योग्योऽस्ति यादृगयं चपलस्ततोऽपीयं चपलेति ध्वनयितुं बहुवचनम्। स तु करेणेयं[1] सर्वांग यत्नेनापि दुस्साध्येति क्व तयोस्साम्यमित्याह। हस्ते घृतापि शयने पर्यंके विशेषेण निवेशितापि क्रोडेभुजान्तरे क्रोडाकृतिः कृतेत्यर्थः। एवं भूतापि वहिरेव गन्तुं यतते। इह यतधातुना सकलगुणाधानेन वहिर्गमनमेव साधयति न तु क्षणस्थानं लज्जाभयाभ्यां विश्वासलेशाभावादिति व्यज्यते ॥७॥

**विश्रब्धनवोढा यथा–**

**दरमुकुलितनेत्रपालिनीवी नियमितबाहु कृतोरुयुग्मबन्धम्**
**करकलितकुचस्थलं नवोढा स्वपिति समीपमुपेत्य कस्य यूनः ॥८॥**

नवोढा कस्य यून[2]स्समीपमुपेत्यागत्यस्वपिति क्रियाविशेषणान्याह। दरमीषन्मुकुलिता मुद्रितानेत्रस्यपालीपक्ष्म यस्मिन्स्वापे एवं यथा स्यात्। नीव्यां कटिवस्त्रग्रन्थौ नियमितौ बाहू यस्मिन् स्फुटमन्यत्। एवं लज्जाभया[3]धिक्येऽपि

---

१- करेण्येयं तु – ग
२- पुरः – क, ख
३- लज्जभया – ग

ईषद्दर्शनेन विश्वासः कस्येति भाग्यवतः इति इयमतीव सुखकरी दुष्प्रापेति व्यज्यते ॥८॥

**समानलज्जामदना मध्या**

**एषैव चातिप्रश्रयादतिविश्रब्धनबोढा।**

**अस्याश्चेष्टा, सागसि प्रेयसि[1] धैर्य्ये वक्रोक्तिः, अधैर्य्ये पुरुषवाक्।**

**यथा–**

**स्वापे प्रियाननविलोकनहानिरेव[2]**
**स्वापच्युतौ प्रियकरग्रहणप्रसङ्गः ।**
**इत्थं सरोरुहमुखीं परिचिन्तयन्ती**
**स्वापं विधातुमपि हातुमपि प्रपेदे ॥९॥**

मध्यामाह। समानौ समबलतयोपरुद्धपरस्परौ लज्जामदनौ यस्याः मुग्धावारणायोत्तरं। प्रगल्भावारणाय पूर्वं एवं च तयोरन्तर्गतामध्येत्यर्थः। वृत्तिमाह। आगोऽपराधः परुषकठोरः । लक्षणमाह[3] स्वापेप्रियाननविलोकनस्य हानिरेव। एवं स्वापोऽसह्यस्तेनमदनोद्रेकः। स्वापच्युतौ-जागरेप्रियकरग्रहणप्रसङ्गः कुचादौ। अयमप्यसह्यस्तेनलज्जा। इत्थं समबलेन परिचिन्तयन्ती सरोरुहमुखी स्वापं विधातुं हातुमपि प्रपेदे व्याकुलाभूदित्यर्थः ॥९॥

**पतिमात्रविषयककेलिकला[4]कलापकोविदा प्रगल्भा वेश्यायां कुलटायां च पतिमात्रविषयत्वाभावान्नातिव्याप्तिः।**

पत्यौ नायके[5]एव नान्यस्मिन्वस्तुनि। मुग्धामध्ययोर्वारणायोत्तरदलम्[6]। एवं चैते भेदास्तिसृष्वपि नायिका[7]सुनिर्विवादाः। पतिशब्दश्च कान्तसामान्येऽस्त्येव अग्रे सर्वं स्फुटीभविष्यति। इदं स्वीयाया[8] एव लक्षणमिति प्राचीनोक्तं स्वरूपव्याक्रियैव पराक्रियेति भावेन तत्तथैवानुवदति वेश्येत्याद्यतिव्याप्तिरित्यन्तम्।

---

१- प्रीये – ग
२- हारिरेव – ग
३- लक्ष्यमाह – ग
४- कला – इति पाठः नास्ति – 'ख'
५- नायिके० – ग
६- ०योत्तरलम् – ग
७- नायका० – ग
८- स्वीयायां० – ग

**अस्यास्तु रतिप्रीतिरानन्दात्संमोहः। प्रथमं यथा-,**

**संस्पृश्य स्तनमाकलय्य वदनं संश्लिष्य कण्ठस्थलं**
**निष्पीयाधरबिम्बमम्बरमपाकृष्य व्युदस्यालकम्।**
**देवस्याम्बुजिनीपतेः समुदयं जिज्ञासमाने प्रिये**
**वामाक्षी वसनाञ्चलैः श्रवणयोर्नीलोत्पलं निह्नुते ॥१०॥**

मुग्धामध्याभ्यां भेदमाह। अस्यास्तु रतौ प्रीतिः। ताभ्यामधिकेत्यर्थः। संमोहोऽज्ञानम् एवं च द्विधेयमित्याह। प्रथममिति। स्तनं संस्पृश्य सम्यगामर्द्य वदनमाकलय्य चुम्बनार्थं मुखे संयोज्य कण्ठस्थलं संश्लिष्यालिंग्य, अधरविम्बं निष्पीय, अम्बरं वस्त्रमपाकृष्य[1] दूरीकृत्य, अलकं कुन्तलं व्युदस्य उत्क्षिप्य। एवं च यभनमुक्तप्रायम्। एवं कृत्वा अम्बुजिनीपतेर्देवस्य सूर्यस्य समुदयं जिज्ञासमाने प्रिये वामाक्षी चपलाक्षी वसनाञ्चलैः श्रवणर्योनीलोत्पलं निह्नुते। सूर्योदयं ज्ञात्वा रतिं मा विरमयेदिति गोपायतीत्यर्थः। इह प्रियाधिकानुरागार्थं चपलनेत्रकरणेन शनैः प्रकाशबोधनार्थं नीलोत्पलधारणेन चातीवरतिप्रीतिर्व्यज्यते ॥१०॥

**द्वितीया[2] यथा–**

**नखक्षतमुरःस्थलेऽधरदले रदस्य ब्रणं**
**च्युता वकुलमालिका विगलिता च मुक्तावलिः।**
**रतान्तसमये मया सकलमेतदालोकितं**
**स्मृतिः क्व? च रतिः क्व? च तवालि ! शिक्षाविधिः ॥११॥**

सखीं प्रति सखीवाक्यमाह। हे आलि! रतान्तसमये मया[3] एतदालोकितं न तु ज्ञातं किं नखक्षतमुरःस्थलेऽधरदले रदस्य दन्तस्य ब्रणं चिह्नं वकुलं पुष्पं तस्य मालिका च्युता। मुक्तावलिश्च विगलिता। एवं च देहस्थ[4]मपीदं नज्ञातं किं[5] पुनरन्यत्। तत्र तव शिक्षाविधिः क्व स्मृतिः क्व च रतिश्च। अज्ञानकररतिस्मरणयोर्विरोधादिति भावः ॥११॥

---

१- वस्त्रमाकृष्य – क, ख
२- द्वितीयं – ख, ग
३- सह इति अधिकः पाठः – क, ख
४- देहस्थमपीदं० – क, ख
५- 'किं' इति पाठः नास्ति – ग

मध्याप्रगल्भे मानावस्थायां प्रत्येकं त्रिविधे। धीरा, अधीरा, धीराधीरा चेति। व्यङ्ग्यकोपप्रकाशा[१] धीरा। अव्यङ्ग्यकोपप्रकाशाऽधीरा[२] व्यङ्ग्याव्यङ्ग्य-कोपप्रकाशा[३]धीराधीरा। इयांस्तु विशेषः। मध्याधीरायाः कोपस्य गीर्व्यञ्जिका। अधीरायाः परुषवाक्। धीराधीरायाश्च[४] वचनरुदिते कोपस्य[५] प्रकाशके। प्रौढाधीरायास्तु रतौदास्यम्। अधीरायास्तर्जनताडनादि, धीराधीराया रतौदास्यं तर्जनताडनादि च, कोप[६]प्रकाशकम्। धीरादि भेदाः स्वीयायामेव, न परकीयायामिति प्राचीनलेखनज्ञामात्रम्। धीरत्वमधीरत्वं तदुभयं वा[७] माननियतम्। परकीयायां[८] मानश्चेत् तेषामावश्यकत्वात्। मानश्च परकीयायां नेति वक्तुमशक्यत्वात्।

**मध्या धीरा यथा–**

**लोलालि[९]पुञ्जे व्रजतो निकुञ्जे स्फारा बभूवुः श्रमवारिधाराः।**
**देहे समीहे भवतो विधातुं धीरं समीरं नलिनीदलेन ॥१२॥**

धीरादिभेदा इति[१०]। उपलक्षणं चैतन्मुग्धादिभेदानाम्। तथा च मध्याप्रगल्भयोर्मानकृतधीरादिभेदः। परकीयायामागतः[११]। शुद्धयोस्तु सुतरां भेद आगत इति स्थितमेवमन्यत्रापि ज्ञेयम्। अतएव कृष्णं प्रति परकीय गोपीवाक्यत्रयमाह। लोलश्चञ्चल आलीनामलीनां च पुञ्जो[१२] अस्मिन्निति कुञ्जेलताच्छन्नदेशे व्रजतस्तव देहे श्रमवारिधाराः स्फारा विस्तृता बभूवुरतो[१३] नलिनीदलेनाब्जपत्रेण[१४] धीरं मन्दं समीरं विधातुं समीहे वाञ्छामि। इह लोलेत्यनेन ताडपत्रभोजिका एव न त्वद्रक्षिका अहं तु ईदृशीति[१५]? स्वमिस्मन्व्यतिरेको व्यज्यते

---

१- ०प्रकाशकाधीरा० – ग
२- ०प्रकाशकाऽधीरा० – ग
३- ०प्रकाशकाधीरा० – ग
४- धीराधीरायास्तु – ख, ग
५- 'कोपस्य' इति पाठः अस्ति – ख
६- कोपस्य प्रकाशका – ग
७- च – ख
८- परकीयाया – ग
९- लोलाजि० – ग
१०- धीराभेदाइति – ग
११- ०मगत० – ग
१२- पुञ्जोपस्मिनिति – ग
१३- ०नतो – क, ख
१४- ०जयत्रेण – क, ख,
१५- नेदृशीति – ग

भवत इत्येकत्वेनानादरः[1]। नलिनीदलेनेति समीराभासः। देहे इति तस्य पराधीनत्वेनानपराधितया न तु स्वतन्त्रेत्यपि[2] सापराधे तेन कोपो व्यज्यते। ॥१२॥

**मध्याऽधीरा यथा–**

**जातस्ते निशि जागरो, मम पुनर्नेत्राम्बुजे शोणिमा,**
**निष्पीतं भवता मधु प्रविततं[3], व्याघूर्णितं मे मनः।**
**भ्राम्यद्भृङ्गघने निकुञ्जभवने लब्धं त्वया श्रीफलं**
**पञ्चेषुः पुनरेष[4] मां हुतवहक्रूरैः शरैः कृन्तति ॥१३॥**

ते निशि जागरो जातः। मदन्यया सहेति भावः। मम पुनर्नेत्राम्बुजे शोणिमा लालिमा तेन कोपः। भवता प्रविततं निरन्तरं मधु निष्पीतं अन्यया सह मे मनो व्याघूर्णितं तदसहनेनेति भावः। भ्राम्यद्भिः भृङ्गैः घने निविडे निकुञ्जभवने त्वया श्रीफलं विल्वं तत्सदृशं कुचस्थलं लब्धमिति भावः पञ्चेषुः कामो मां हुतवहोऽग्निस्तद्वत् क्रूरैः शरैः कृन्तति[5]। त्वयोपभुक्ता सहनादृत्ययामीत्यथ[6]ः इह परुषवाचा कोपो व्यज्यते ॥१३॥

**मध्या धीराधीरा यथा–**

**कान्तानुरागचतुरोऽसि मनोहरोऽसि**
**नाथोऽसि किञ्च नवयौवनभूषितोऽसि**
**इत्थं निगद्य सुदृशा वदने प्रियस्य**
**निःश्वस्य बाष्पलुलिता निहिता दृगन्ताः ॥१४॥**

कान्तासु अनुरागे चतुरोऽसि न प्रियायां तथा मनोहरोऽसि अन्यासां न मम। तथा नाथोऽसि प्रभुरसि। न किञ्चिद् वक्तुं योग्यमिति भावः। किं बहुना यौवनभूषितोसि। युवावस्थया दुर्वीनीतत्वमाचरसीति भावः। इत्थं सुदृशा निगद्य निःश्वस्य प्रियस्य वदने वाष्पैरश्रुभिर्लुलितास्तरला दृगन्ताः नेत्रप्रान्ताः निहिताः निक्षिप्ताः इह परुषवाग्रुदितम् ॥१४॥

---

१- ०त्वेनारदः – ग
२- ०त्वपि – ग-
३- प्रविततं – ग
४- पुनरेष – क, ख
५- कृतन्ति – ग
६- दृष्ट्वा – ग

**प्रौढाधीरा यथा[१]–**

**नो तल्पं भजसे न जल्पसि सुधाधाराऽनुकारा गिरो**
**दृक्पातं कुरुषे न वा परिजने[२] कोप[३]प्रकाशच्छलात्।**
**इत्थं केतकगर्भगौरिं दयिते ! कोपस्य सङ्गोपनं**
**तत्स्यादेव, न चेत्पुनः सहचरी कुर्वीत साचि स्मितम् ॥१५॥**

कान्तां प्रति कान्तवाक्यमाह। परिजनस्य सपत्न्याः क्रोधस्तस्य प्रकाशस्तस्य छलाद्व्याजादिदं सर्वं क्रियास्वन्वेति। हे दयिते! प्रिये! केतकस्य गर्भस्तद्वद् गौरीपते[४]। तल्पं नो भजसे। सुधाधाराया अनुकारा सदृशीर्गिरो न जल्पसि। दृक्पातं **कटाक्षं** न वा कुरुषे इत्थं तल्पं भजता[५] भारादिभिः कोपस्य तत्संगोपनं स्यादेव **यदि** सहचरी[६] सा च तिर्य्यककृतग्रीवं[७] स्मितं न कुर्वीत एवं च कोपाभावे स्मितं निरोधकं इह रतौ दास्यम् ॥१५॥

**प्रौढाऽधीरा यथा–**

**प्रतिफलमवलोक्य स्वीयमिन्दोः कलायां**
**हरशिरसि परस्या वासमाशङ्कमाना ।**
**गिरिशमचलकन्या तर्जयामासकम्प–**
**प्रचलवलयवलात्कान्तिभाजाकरेण ॥१६॥**

स्वोक्तिमाह। अचलकन्या पार्वती हरशिरसि इन्दोः कलायां छायायां स्वीयम्प्रतिफलाप्रतिविम्बमवलोक्य **अतः** परस्याः सपत्न्या वासमाशंकमाना सती **अतः कम्पेन** प्रचलत् वलयं कंकणं **तस्य वला**त् प्रसरन्तीं कान्तिं भजति करेण गिरिशं तर्जयामास भर्त्सयामा**सेत्यर्थः**। स मणिकंकणशब्दयुक्तकरेण तर्जनस्यातिभयप्रदत्वं तेन इह रतौ दास्यं तर्जने ॥१६॥

---

१- प्रौढाधीरा यथा इति पाठः नास्ति – क, ख
२- परिजन – ग
३- क्रोध० – ग
४- गौरीपते – क, ख
५- भजना भावादिभिः – ग
६- साहाचारी – ग
७- वरीयं – क, ख

**प्रौढा धीराऽधीरा यथा–**

**तल्पोपान्तमुपेयुषि प्रियतमे वक्रीकृतग्रीवया**
**काकुव्याकुलवाचि साचिहसितस्फूर्जत्कपोलश्रिया**
**हस्तन्यस्तकरे पुनर्मृगदृशा लाक्षारसक्षालित-**
**प्रोष्ठीपृष्ठमयूखमांसलरुचो विस्फारिता दृष्टयः ॥१७॥**

**तल्पस्योपान्तमुपेयुषि** प्राप्तवति प्रियतमे सति वक्रीकृतग्रीवया अतः[1] काक्वा **ध्वनिवि**काररूपया[2] व्याकुलावाग्यस्य तस्मिन् अतस्साचि तिर्य्यक् हसितं तेन स्फुरन्ती[3] कपोलयोः श्रीर्यस्यास्तया अतो विश्वासात् हस्ते न्यस्तःकरोयेन तस्मिन्। पुनर्मृगदृश्याचपलाक्ष्यालाक्षाया रसस्तेन क्षालितंधौतमिव प्रोष्ठ्याः शफर्य्याः पृष्ठं तस्य मयूखो दीप्तिस्तद्वन्मांसलापुष्टा रुग्यासां[4] तादृश्यः कटाक्षा**क्षेपा** विस्फारिताविस्तारिता इह शफरी पृष्ठमरुणं तद्यदिलाक्षारस[5] क्षालितं स्यात्तद्वन्नेत्रोपमयातीवकोपवत्त्वेन[6] रतौदास्यं तर्जनादि च व्यज्यते ॥१७॥

एते धीराऽऽदि षड्भेदा द्विधाः।

ज्येष्ठा कनिष्ठा च। तत्र धीरा ज्येष्ठाकनिष्ठा च। अधीराज्येष्ठा **कनिष्ठा** च। धीरा धीरा ज्येष्ठा कनिष्ठा च। परिणीतत्वे सति भर्तुरधिकस्नेहा ज्येष्ठा। परिणीतत्वे सति भर्तुर्न्यूनस्नेहा कनिष्ठाः। अधिकस्नेहासु **न्यूनस्ने**हासु परकीयासु सामान्यवनितासु च नातिव्याप्तिः। तासाञ्च[7]परिणीतपदेन व्यावर्तनात्।

**धीरा ज्येष्ठा कनिष्ठा च यथा–**

**एकस्मिन् शयने सरोरुहदृशोर्विज्ञाय निद्रां तयो–**
**रेकां पल्लवितावगुण्ठनपटामुत्कन्धरो दृष्टवान्।**
**अन्यस्याः सविधं समेत्य निभृतं व्यालोलहस्ताङ्गुलि**
**व्यापारैर्वसनाञ्चलं चपलयन् स्वापच्युतिं क्लृप्तवान् ॥१८॥**

---

१- अतः इति पाठः नास्ति – ग
२- ०विकास० – क, ख
३- स्फुलन्ती – क, ख
४- रुग्यसां – ग
५- लक्षाक्षालितं – क, ख
६- कोपत्वेन - ग
७- तासां च इति पाठः नास्ति – ग

एकस्मिन् शयने सरोरुहदृशोर्निद्रां विज्ञाय तयोर्मध्ये एकां पल्लवित आपादतलमस्तकं विस्तारितोऽवगुण्ठनपटः प्रच्छादनवस्त्रं यया क्रोधादिति भावः। तामुत्कन्धर[1] उद्ग्रीवो दृष्टवान् ततोऽन्यस्यास्सविधं समीपमुपेत्य निभृतं गुप्तं यथा स्यात् तथा व्यालोला हस्ताङ्गुलयस्तासां व्यापारैर्वसनाञ्चलं चपलयन् शिथिलयन्[2] स्वापच्युतिं क्लृप्तवानकार्षीदित्यर्थः। इह पल्लवितपदेन[3] एकव्यापारेण निद्राच्युतावपि व्यापारबहुत्वेन च रतौदास्यं पूर्वार्द्धे क्रीडाभावात्कनिष्ठात्वमुत्तरार्द्धे क्रीडौत्सुक्या ज्ज्येष्ठात्वम् ॥१८॥

**अधीरा ज्येष्ठा कनिष्ठा च यथा–**

**अन्तः कोपकषायिते प्रियतमे पश्यन् घने[4]कानने**
**पुष्पस्यावचयाय नम्रवदनामेकां समायोजयत्**
**अर्धोन्मीलितलोचनाञ्चलचमत्काराभिरामाननां**
**स्मेरार्द्राधरपल्लवां नववधूमन्यां समालिङ्गति ॥१९॥**

अन्तर्हृदि कोपेन कषायिते उद्विग्ने प्रियतमे घने कानने वने पश्यन् नम्रवदनां कोपेनेति भावः। एकां पुष्पस्यावचयाय पुष्पग्रहणाय समायोजयत्, आज्ञापयत् अर्द्धमुन्मीलितं लोचनाञ्चलं तस्य चमत्कारस्तेनाभिरामं मनोहरमाननं यस्याः स्मेरेणेषद्धासेनार्द्रोऽधरपल्लवो यस्याः सम्यगियं वञ्चिता तेनेति भावेन तामन्यां नववधूं समालिंगति ॥१९॥

**धीराधीरा ज्येष्ठा कनिष्ठा च यथा–**

**धैर्य्याधैर्य्यपरिग्रहग्रहिलयोरेणीदृशोः प्रीतये**
**रत्नद्वन्द्वमनन्तकान्तिरुचिरं मुष्टिद्वये न्यस्तवान्।**
**एकस्याः कलयन् करे प्रथमतो रत्नं[5] परस्याः प्रियो**
**हस्ताहस्तिमिषात्स्पृशन्कुचतटीमानन्दमाविन्दति ॥२०॥**

धैर्य्याधैर्ययोः परिग्रहो धारणं तेन ग्रहिलयोर्गर्विष्ठयोः[6] क्रुद्धयोर्ग्रहशीलयोर्वेत्याहुः। एणीदृशोः प्रीतये प्रसादाय रुचिरमनन्तकान्तिरत्नस्य द्वन्द्वं

---

१- ०मुत्कन्धरां – क, ख
२- शिथिलयन् इति पाठः नास्ति – ग
३- करेण – ग
४- घन – क
५- धूर्तः – क
६- ग्रहविष्ठयो इति अधिकः पाठः – ग

द्वयं मुष्टिद्वये न्यस्तवान्। परन्तु प्रियः प्रथमतः आदौ एकस्याः कनिष्ठायाः करे रत्नं कलयन् ग्राहयन्। परस्याः हस्ताहस्तिमिषात् सपत्नी प्रतारणार्थं युद्धव्याजात्। हस्तोपरि हस्तधारणव्याजात् वा कुचतटीं स्पृशन्नानन्दमाविन्दति लभते। मुष्टिपदेन शीघ्रतरग्रहणायोग्यतया बहुकालं स्पर्शक्रिया व्यज्यते। तेन ज्येष्ठात्वम् ॥२०॥

**अप्रकटपरपुरुषानुरागा परकीया सा च द्विधा। परोढा कन्यका च। कन्यकायाः पित्राद्यधीनतया परकीयता। अस्या गुप्तैव सकला चेष्टा।**

**परोढा यथा[1]–**

**अयं रेवाकुञ्जः कुसुमशरसेवासमुचितः**
**समीरोऽयं बेलावनविदलदेलापरिमलः।**
**इयं प्रावृड् धन्या नवजलदविन्यासचतुरा**
**पराधीनं चेतः सखि ! किमपि कर्तुं मृगयते ॥२१॥**

अप्रकटत्वमस्फुटत्वं तच्च चतुरजनवेद्यत्वम्। एतेन सामान्यानिरासः सखीं प्रति सखीवाक्यमाह हे सखि ! मे चेतः किमपि पराधीनं वस्तु परपुरुषोपभोगरूपं च कर्तुं मृगयतेऽन्वेषयति।

कुतो यतोऽयं प्रसिद्धस्सुरतरम्यश्च। रेवा नर्मदा तस्याः कुञ्जो वनं कुसुमशरो मदनो देवश्च। तस्य सेवा भजतं रतिश्च तस्मै समुचितो योग्यः पुनरयं प्रसिद्धः। खेदहरश्च समीरो वायुर्वेलानदीरोधस्तत्र वनं तत्र विदलन्त्यो विंस्फुटन्त्योया[2] एलाइलायचीति प्रसिद्धास्तासां परिमलो विमर्दोत्थो गन्धो यस्मिन्तादृशः। पुनरियं भयंकरी सुखकरी च। प्रावृट् वर्षाकालः। नवा गम्भीराः। सुरतोचिताश्च जलदास्तेषांन्यासेन[3] चतुरा छन्ना विलासवती[4] च धन्या जलवती पुरुषसहितत्वेन भाग्यवती च। एवं च परपुरुषानुरागो गोप्यते ॥२१॥

---

१- परोढा यथा इति पाठः नास्ति – ग
२- स्फुटन्त्यो – ग
३- न्यासे – ग
४- विलावती – ग

गुप्ता-विदग्धा-लक्षिता-कुलटा-ऽनुशयाना-मुदिता प्रभृतीनां परकीयायामेवान्तर्भावः।

गुप्ता त्रिविधा

वृत्तसुरतगोपना, वर्तिष्यमाणसुरतगोपना[1]

वृत्त[2]वर्तिष्यमाणसुरतगोपना च[3]।

त्रितयमपि यथा –

श्वश्रूः क्रुध्यतु विद्विषन्तु[4] सुहृदो, निन्दन्तु वा यातरः[5]

तस्मिन् किन्तु न मन्दिरे सखि ! पुनः स्वापो विधेयो मया।

आखोराक्रमणाय कोणकुहरा-दुत्फालमातन्वती[6]

मार्जारी नखरैः खरैः कृतवती, कां कां नमे दुर्दशाम् ॥२२॥

सखीं प्रति सखीवाक्यमाह। श्वश्रूरित्यादि। पूर्वार्द्धं सुगमम्। हे सखि! आखोर्मूषकस्याक्रमणाय मारणाय कोणस्य कुहरं विलं तस्मादुत्फालं उड्डीनमातन्वती मार्जारी विडाली खरैस्तीक्ष्णैर्नखरैः[7] कां कां कुचकपोल क्षतवस्त्रस्फोटादिकामवाच्यां मे दुर्दशामवस्थां कृतवती इह सखी पदेन गोपनानर्हता, मार्जारी स्त्रीत्वेनपशुपरपुरुष करस्पर्शोऽपि नास्तीति स्वस्मिन्सतीत्वं तेन त्रैकालिकान्यानुरागो गोप्यते ॥२२॥

विदग्धा च द्विविधा–

वागृविदग्धा क्रियाविदग्धा च।

तत्र वागृविदग्धा यथा–

निविडतरतमालमल्लिवल्ली विचकिलराजिविराजितोपकण्ठे।

पथिक ! समुचितस्तवाद्य तीव्रे, सवितरितत्र सरित्तटे निवासः ॥२३॥

पुंश्चलीभावनिपुणत्वं विदग्धत्वं तद्वाक्येनाह। हे पथिक ! अनेन वासयोग्यता तत्र सरित्तटे निविडतराश्च तमालाश्च। मल्लिवल्ली च विचकिलाश्च पुष्पविशेषास्तेषां राजयः पङ्क्तयस्ताभिरुपराजितमुपकण्ठं समीपदेशो

---

१- वर्त्तमान – ग

२- वृत्त इति पाठः नास्ति – ग

३- 'च' इति पाठः नास्ति – ख

४- निर्दिशन्तु – ग

५- जातरः – ग

६- ०दुत्फालकातन्वती – क, ख

७- नखैः – ग

८- समुचित – ग

यस्मिन्तत्रसरित्तटे सवितरि सूर्य्ये तीव्रमध्याह्ने सति अद्य तव निवासः समुचितः[८]। निविडा दिनान्यदृष्टायोग्यत्वं, सरित्तटपदेन सुखदातृत्वं, तीव्रे इति निःशङ्कत्वं तत्रेति प्रसिद्धत्वं तेन केन पथा गन्तव्यमित्यपि नास्तीति च ध्वन्यते[१] ॥२३॥

**क्रियाविदग्धा यथा–**

**दासाय भवननाथे वदरीमपनेतुमादिशति।**

**हेमन्ते हरिणाक्षी पयसि कुठारं विनिक्षिपति ॥२४॥**

भवनस्य नाथे न 'तु स्वस्य' तेनाप्रियत्वम्। वदरीमपनेतुं छेत्तुं दासायादिशति सति। हरिणाक्षी चपलाक्षी हेमन्ते शीतर्त्तौ पयसि कुठारं विशेषेण निःक्षिपति। हरिणाक्षीत्यनेनातीवासह्यत्वं, हेमन्ते इत्यनेनावगाहायोग्यत्वं, कालान्तरे विस्मृतिरेव वा स्यादिति भावेन क्षेपणरूपक्रियया[२] नैपुण्यं व्यज्यते ॥२४।

**लक्षिता यथा–**

**यद्भूतं तद्भूतं यद्भूयात्तदपि वा भूयात्।**

**यद्भवति तद्भवति वा विफलस्तव कोऽपि[३] गोपनायासः ॥२५॥**

चतुर[४]ज्ञानपरपुरुषानुरागां लक्षितां कस्याश्चित्स्वसख्याः स्वनिवारणकारिण्या अन्यत्र तद्गोपनकारिण्या[५] वाक्येनाह। यद्भूतमिति ॥२५॥

**कुलटा यथा–**

**एते वारिकणान् किरन्ति पुरुषान् वर्षन्ति नाम्भोधराः**

**शैलाः शाद्वलमुद्वमन्ति न सृजन्त्येते पुनर्नायकान्।**

**त्रैलोक्ये तरवः फलानि सुवते नैवारभन्ते जनान्**

**धातः कातरमालपामि कुलटाहेतोस्त्वया किं कृतम् ॥२६॥**

जारसमूहगामिनीं कुलटां तद्वाक्येनाह। हे धातः ! कातरं कृपणमहमालपामि कुलटा हेतोस्त्वया किं कृतं न किमपीत्यर्थः। आक्षेपमेवाह[६]। एते

---

१- व्यज्यते –ग

२- क्षेपणरूपयाक्रियया – क, ख

३- कोऽपि इति पाठः नास्ति – ग

४- चतुरं – ग

५- गोपकारिण्या – ग

६- आक्षेपमाह – ग

७- ०त्वाभिमनमम्भो – ग

अयाचितान् किरन्ति त्यजन्ति पुरुषानस्मदुपयोगिनो[1] याचितानपि न वर्षन्ति। एवमग्रेऽपि इह पुनः पुनः पुरुषवाञ्छयोपभोगसमूहवत्ता व्यज्यते ।।२६।।

वर्तमानस्थानविघट्टनेन भाविस्थानाभावशङ्कया स्वानधिष्ठितसङ्केतस्थले भर्तुर्गमनानुमानेन चानुशयाना भवति।

**प्रत्येकमुदाहरणानि–**

**समुपागतवति चैत्रे निपतति पत्रे लवङ्गलतिकायाः।**
**सुदृशः कपोलपाली शिव शिव तालीदलद्युतिं लेभे ।।२७।।**

अभीष्टहानिकृतानुतापवतीमनुशयानां सखीवाक्येनाह। चैत्रे वृक्षच्छदच्छेदके समुपागतवति सति लवङ्गलतिकायाः पत्रे निपतति सति शिवशिवेति[2] अनुकम्पायां सुदृशः कपोलयोः पाली मण्डलं तालीदलस्येव द्युतिं लेभे संकेतस्थलभङ्गपीडयेति भावः ।।२७।।

**निद्रालुकेकिमिथुनानि कपोतपोत–**
**व्याधूतनूतनमहीरूहपल्लवानि।**
**तत्रापि तन्वि ! न वनानि कियन्ति सन्ति**
**खिद्यस्व न प्रियतमस्य गृहं प्रयाहि ।।२८।।**

निद्रालूनि केकिनां मिथुनानि युगलानि येषु कपोतानां पोता बालास्तैर्व्याधूताः कम्पिता नूतना महीरुहाणां पल्लवा येषु तानि वनानि तत्रापि पूर्वदृष्टे एव कियन्ति न सन्ति सन्त्येव न खिद्यस्व दुःखं मा कुरु। प्रियतमस्य गृहं प्रयाहि चल। निद्रेत्यनेन जनसंचारशून्यत्वं, मिथुनेन परस्परविरहासहिष्णुत्वं तेन नानाविधसुरतौचित्यं कपोतेत्यादिनानेकविलासिसमूहवत्ता च व्यज्यते ।।२८।।

**कर्णकल्पितरसालमञ्जरीपिञ्जरीकृतकपोलमण्डलः[3]।**
**निष्पतन्नयनवारिधारया राधया मधुरिपुर्निरीक्ष्यते ।।२९।।**

कर्णयोः कल्पिता या रसालानामाम्राणां मञ्जर्यस्ताभिः पिञ्जरीकृतं कपोलयोर्मण्डलं यस्य स मधुरिपुः कृष्णो निष्पतन्तीनयनाभ्यां वारिधारा यस्या स्तया राधया निरीक्ष्यते संदृश्यते। कर्णकल्पितेन त्वदुक्तश्रवणायोग्यमेव न तु

---

१- दुपभोगिनो - ग
२- शिव इति पाठः नास्ति – ग
३- कपोलकुण्डलः पाठः – ग

स्तया राघया निरीक्ष्यते संदृश्यते। कर्णकल्पितेन त्वदुक्तश्रवणायोग्यमेव न तु अनुभवयोग्यमिति रसालेन स्पृहणीयत्वं मञ्जरीत्यनेन संङ्केततरुमञ्जरी[१] दर्शनविरहः विषादेन रोदनेन च दुःखातिशयत्वं मधुरिपुत्वेन रसशत्रुत्वं च व्यज्यते ॥२९॥

**मुदिता यथा–**

**गोष्ठेषु तिष्ठति पतिर्बधिरा ननन्दा**
**नेत्रद्वयस्य न च पाटवमस्ति यातुः।**
**इत्थं निगद्य तरुणी कुचकुम्भसीम्नि**
**रोमाञ्चकञ्चुकमुदञ्चितमाततान ॥३०॥**

कान्तलाभसम्भावनादिजन्यानन्दवतीं मुदितां स्ववाक्येनाह। गोष्ठेषु पतिस्तिष्ठति। ननान्दा बधिरा यातुः पतिभ्रातृपत्न्या नेत्रद्वयस्य पाटवं सामर्थ्यं च नास्ति। इत्थं शङ्काभावं निगद्य तरुणी कुचौकुम्भाविव तयोः सीम्निरोमाञ्चाः रोमोद्गमाः कञ्चुकं कवचमिव आततान। गोष्ठेषु बहुवचनेन बहुकालमनागामित्वं बधिरेण तस्याः प्रायोमूकत्वाद् दृष्टमप्यनया न वक्तुं शक्यमिति, कठिनकरिकुम्भवत्कुचोपरिकञ्चुकवद्रोमाञ्चकरणेनातीवसुरतप्रियत्वं[२] च ध्वन्यते ॥३०॥

**कन्यका यथा–**

**किञ्चित्कुञ्चितहारयष्टि सरलभ्रूवल्लिसाचिस्मितं**
**प्रान्तभ्रान्तविलोचनद्युतिभुजापर्य्यस्तकर्णोत्पलम्।**
**अङ्गुल्या स्फुरदङ्गुलीयकरुचा कर्णस्य कण्डूयनं**
**कुर्वाणा नृपकन्यका सुकृतिनं सव्याजमालोकते ॥३१॥**

नृपकन्यका सुकृतिनमालोकते कीदृशी कर्णस्य प्रान्ते भ्रान्ते विलोचने तयोर्द्युतिं भुनक्तीति तथा स्फुरन्ती अङ्गुलीयकस्य मुद्रिकाया रुग्यत्र तथा अङ्गुल्या कर्णस्य कण्डूयनं कुर्वाणा क्रियाविशेषणान्यन्यानि किञ्चित्कुञ्चिता हारयष्टिर्यत्र। सरले भ्रूवल्यौ यत्र। साचि तिर्य्यक्। स्मितं यत्रैवं यथा स्यात्। सरलेन हृदयमनोहरत्वं साचिस्मितेन ज्योत्स्नागमननिषेधः प्रान्तेत्यादिनाऽन्यानवलोकित आयास्यतीति। कर्णकण्डूयनेन एवं रतिभोगइति नृपेत्यनेन दुष्प्रापत्वमिति च ध्वन्यते ॥३१॥

---

१- तरु इति पाठः नास्ति – ग
२- प्रियं – ग

वित्तमात्रोपाधिकसकलपुरुषानुरागा[1] सामान्यवनिता[2] नन्वग्निमित्रे क्षितिपतावनुरक्तायामिरावत्यामव्याप्तिः[3], तत्र वित्तमात्रोपाधेरभावादिति चेन्मैवम्, साऽपि काश्मीरहीरकादिदातरि महराजेऽनुरक्ता, न तु महर्षौ तेनावगम्यते तत्रापि वित्तमात्रमेवोपाधिरिति।

सा यथा–

**दृष्ट्वा प्राङ्गणसन्निधौ बहुधनं दातारमभ्यागतं**
**वक्षोजौ तनुतः परस्परमिवाश्लेषं कुरङ्गीदृशः।**
**आनन्दाश्रुपयांसि मुञ्चति मुहुर्मालामिषात्कुन्तलो**
**दृष्टिः किञ्च धनागमं कथयितुं कर्णान्तिकं गच्छति ॥३२॥**

प्राङ्गणसन्निधौ बहुधनं दातारमभ्यागतं नत्वाहूतं तेनबहुधनदातृत्वेन हर्षातिशयः। दृष्ट्वा न तु स्पृष्ट्वा तेन दर्शनमात्रेणैवेदृगवस्थेति धनलोलुपत्वं। कुरङ्गीदृशो वक्षौजौ परस्परमाश्लेषमिव तनुतः आवाभ्यां मिलित्वा सम्यग्योद्धव्यमितिरतिस्पृहयेति भावः। पुनरानन्दाश्रुकर्त्तृपयांसि मुञ्चति कुन्तलो मिषात् व्याजात्मालां मुञ्चति हर्षान्मूर्द्धचलनादिति भावः। किं बहुना दृष्टिर्धनागमं कथयितुं कर्णान्तिकं गच्छति। एवं च धनदर्शनेनैव तत्तत्सत्कारावस्थया धनमात्र प्रेमवत्वं[4] व्यङ्ग्यम् ॥३२॥

**एता अन्यसम्भोगदुःखिता, वक्रोक्तिगर्विता, मानवत्यश्चेति तिस्रो भवन्ति।**

**अन्यसम्भोगदुःखिता यथा[5]–**

**त्वं दूति ! निरगाः कुञ्जं न तु पापीयसो गृहम्।**
**किंशुकाभरणं देहे दृश्यते कथमन्यथा ॥३३॥**

एताः स्वीयापरकीयासामान्या इत्यर्थः। कान्तानयनार्थं प्रेषितां तेनोपभुक्तां दूतीं प्रति सखीवाक्यमाह। हे दूति त्वं वनं निरगाः पापीयसोऽधमस्य गृहं न कुतोऽन्यथा। किंशुकं पलाशपुष्पं तत्सदृशं नखक्षतं तदेवाभरणं देहे कथं दृश्यते। दूतीत्यनेनासत्यवदनायोग्यत्वं, संवेदनाभिज्ञत्वं च, कुञ्जेन विविध-मदनोद्दीपनशालित्वं च व्यज्यते ॥३३॥

---

१- पुरुषाभिलाषा – ग
२- सामान्यावनिता – ग
३- ०मैरावत्यां – ग
४- प्रेमत्वं – ग
५- अन्यसम्भोग दुःखिता यथा इति पाठः नास्ति – ग

**वक्रोक्तिगर्विता द्विधा। प्रेमगर्विता सौन्दर्यगर्विता च।**

**प्रेमगर्विता यथा–**

> **वपुषि तव तनोति रत्नभूषां**
> **प्रभुरिति धन्यतमाऽसि किं ब्रवीमि।**
> **सखि ! तनुनयनान्तरालभीरुः**
> **कलयति मे न विभूषणानि कान्तः ॥३४॥**

सखीं प्रति सखी वाक्यत्रय[1]मुदाहरति। हे सखि ! प्रभुर्वल्लभस्तव वपुषि रत्नभूषां तनोति विस्तारयति। इति हेतोस्त्वं धन्यतमासि। अहं किं ब्रवीमि। मे कान्तः विभूषणानि न कलयति। कीदृशः। तनुनयनयोरन्तरालं व्यवधानं तेन भीरुः। इह प्रभुरित्यनेन प्रियतमत्वं भूषाकरणेन स्वतोऽशोभावत्वमिति[2] किं शब्देन[3] एवं प्रकारेण धन्यतमासीति किं वक्तुं योग्यमित्याक्षेपेण त्वं धन्यासि[4] न कुतस्तमन्वर्थ इति मम तु कान्तो हृदयमनोहरः। पुनः प्रेम्णातनुनयनव्यवधानमपि न सहते किमर्थं भूषणेन प्रेमाविष्कर्तुं क्षमतामिति ततो व्यतिरेकादहमेवधन्यतमेति व्यज्यते ॥३४॥

**सौन्दर्यगर्विता यथा–**

> **कलयति कमलोपमानमक्ष्णोः**
> **प्रथयति वाचि सुधारसस्य साम्यम्॥**
> **सखि कथय किमाचरामि कान्ते**
> **समजनि तत्र सहिष्णुतैव दोषः ॥३५॥**

हे सखि ! कान्तः मेऽक्ष्णोः कमलोपमानं कलयति विचारयति। तथा वाचि सुधारसस्य साम्यं तुलां प्रथयति ख्याति। तथा च त्वं कथय कान्तेऽहं किमाचरामि। तत्र सहिष्णुतैव सहनमेव दोषः। समजनि जातः इह कमलाधिकत्वेन निरुपमत्वमेवमग्रेऽपि[5]। एवं च तथा विचारयति। न तु वक्तरि पुनः कान्ते मनोहरे प्रेमपात्रे सहन[6] दुष्टत्वेनातीवसौन्दर्यमाधुर्य्योदार्य्यं व्यज्यते ॥३५॥

---

१- त्रय इति पाठः नास्ति – ग
२- अशोभत्वमिति – ग
३- किंशुकेन – क
४- धन्यापि – ग
५- ०त्वामेवं० – ग
६- सह दुष्ट० – ग

प्रियापराधसूचिका चेष्टा मानः

स च लघुर्मध्यमो गुरुश्च, अल्पापनेयो लघुः,

कष्टापनेयो मध्यमः, कष्टतरापनेयो गुरुः।

असाध्यस्तु रसाभासः।

अपरस्त्रीदर्शनादिजन्मा लघुः, गोत्रस्खलनादिजन्मा

मध्यमः, अपरस्त्रीसङ्गजन्मा गुरुः

अन्यथासिद्धकुतूहलाद्यपनेयो लघुः,

अन्यथावादशपथाद्यपनेयो मध्यमः

चरणपाताद्यपनेयो गुरुः।

अपरस्त्रीदर्शनादिजन्मा मानवती यथास्वेदाम्बुभिः क्वचन पिच्छिलमाङ्गभूमौ[1] शातोदरि! क्वचन कण्टकितं चकास्ति। अन्यां विलोकयति भाषयति प्रियेऽपि[2] मानः क्व दास्यति पदं तव तन्न विद्मः ॥३६॥

हे शातोदरि! सूक्ष्मोदरि अन्यां नायिकां विलोकयति भाषयत्यपि सति प्रिये ते क्वचन कुत्रचिदङ्गस्य भूमौ स्थले स्वेदाम्बुभिः पिच्छलं क्वचन कण्टकितं च चकास्ति। अतो मानः क्व कुत्र स्थाने पदं दास्यति तन्न विद्मो न जानीमः। इह शातत्वेन सूक्ष्मत्वादुदरेऽपि न स्थानयोग्यता। दर्शनेनैव स्वेदपुलकरूपे[3] सागस्यपि प्रियेऽनुरागे याते (जाते) मानस्य नैर्मूल्यादल्पापनेयत्वादि च व्यज्यते ॥३६॥

**गोत्रस्खलनादिजन्मा यथा–**

**यद्गोत्रस्खलनं तन्वि भ्रमं यदि न[4] मन्यसे ।**

**रोमालिव्यालिसंस्पर्शशपथं तन्वि! कारय ॥३७॥**

कान्तां सान्त्वयितुं कान्तवाक्यमाह। हे तन्वि! यद्गोत्रस्खलनं तत्र यदि भ्रम इति न मन्यसे तर्हि रोमाली एव व्यालिस्सर्पिणीतस्याः (सं)स्पर्शस्तमेव शपथं परीक्षां कारय। रोमालीति श्यामत्वाद्विषातिशयेन दुःस्पर्शत्वं कारयति स्वस्य पराधीनत्वं च व्यज्यते ॥३७॥

---

१- पिच्छलo - ग

२- प्रियोपि - ग

३- स्वेदपुलकरुपा- ग

४- न इति पाठः नास्ति - ग

परस्त्रीसङ्गजन्मा यथा–

दयितस्य निरीक्ष्य भालदेशं
चरणालक्तकपिञ्जरं सपत्न्याः।
सुदृशो नयनस्य कोणभासा
श्रुतिमुक्ताः शिखरोपमा बभूवुः ॥३८॥

स्वोक्तिमाह। दयितस्य भालदेशं सपत्न्याश्चरणयोः आलक्तकं लाक्षारसस्तेन पिञ्जरमरुणं निरीक्ष्य सुदृशो नायिकाया नयनस्य कोणभासात्तस्या दयितस्य[1] वा[2] श्रुतिमुक्ताः कर्णमुक्ताफलानि शिखरं पक्वदाडिमबीजाभं तदुपमा बभूवुः। नयनैकत्वेन शोभातिशयो मुक्तायास्तथा भवनेन चरणपातत्वं भूषणदानत्वञ्च व्यज्यते॥३८॥

एताः षोडशाप्यष्टाभिरवस्थाभिः प्रत्येकमष्टविधाः प्रोषितभर्तृका, खण्डिता, कलहान्तरिता, विप्रलब्धा, उत्का, वासकसज्जा, स्वाधीनपतिका अभिसारिका चेति गणनादष्टाविंशत्यधिकशतं भवन्ति।

तासामप्युत्तमाधममध्यमगणनया चतुरधिकाशीतियुतं शतत्रयं भवन्ति इति केचिदाहुः।

यस्त्वेतासां दिव्यादिव्योभयगणनया द्विपंचाशदधिकशतयुतसहस्रं भेदा भवन्ति।

दिव्या इन्द्राण्यादयः, अदिव्या मालत्यादयः दिव्यादिव्याः सीतादयः।

तन्न, अवस्थाभेदेनैव नायिकाभेदात् जातिभेदेन भेदस्वीकारे नायकानामप्येवमानन्त्यं स्यात्। दिव्यादिभेदा नायकानामपि सन्ति, इन्द्रादयो दिव्याः अदिव्या माधवादयः दिव्यादिव्या अर्जुनादयइति।

यद्यपि मुग्धाया धीरादिभेदाभावस्तथाविधप्रज्ञासामग्र्यभावात्। तथा चाष्टविधत्वाभावो भवितुमर्हति।

तथापि प्राचीनलेखनानुरोधेन नवोढामप्यालम्ब्यै[3] (म्ब्यै) ते भेदा अवगन्तव्याः

---

१- दयितायाः इति पाठः – ग
२- बा इति नास्ति – ग
३- नवोढामथालम्ब्यते इति पाठः – ग

देशान्तरगते प्रेयसि सन्तापव्याकुलचिन्ता प्रोषितभर्तृका। उत्का-कलहान्तरिता-विप्रलब्धानां पतिदेशान्तरगतत्वाभावान्न तत्रातिव्याप्तिः।

अस्याश्चेष्टा दशमावस्था[1]।

**मुग्धा प्रोषितभर्तृका यथा–**

**दुःखं दीर्घतरं वहन्त्यपि सखीवर्गाय नो भाषते**
**शैवालैः शयनं सृजन्त्यपि पुनः शेते न वा लज्जया।**
**कण्ठे गद्गद्वाचमञ्चति दृशा धत्ते न वाष्पोदकं**
**सन्तापं सहते यदम्बुजमुखी तद्वेद चेतोभवः ॥३९॥**

षोडशेति। मध्याप्रगल्भयोः प्रत्येकं धीरादिभेदानां ज्येष्ठा कनिष्ठात्वेन द्वैविध्ये द्वादश मुग्धात्वेकैव। एवं त्रयोदश भेदवती। स्वीया परकीया च द्विधा। सामान्यात्वेकैवेति षोडशेत्यादिकेचिदाहुरित्यन्तं प्राचीनैकग्रन्थः संख्यापरः। सिद्धान्ते तु मुग्धादिभेदस्य मध्यादिकृतधीरादिभेदस्य च परकीयादौ संभवात् प्रत्येकं त्रयोदशादिभेदेन संख्या प्रख्यापनीयाः। यदि तु परकीयाया भेदोनिरुक्तबीजादयस्तु सामान्याः यो नास्तीत्याग्रहस्तदा तथैवास्तामिति वयं विभावयाम इति।

अन्ये काञ्चित्सखीं प्रति सखीवाक्यमाह–

हे सखि ! दीर्घतरं दुःखं वहन्ती[2] अपि
लज्जया इदमुत्तरत्रापि च सखीवर्गाय
नो भाषते, शैवालैः शयनं शय्यां सृजन्ती[3]
अपि पुनर्न वा शेते।

पुनः कण्ठे गद्गद्वाचमञ्चति दृशा वाष्पोदकमश्रुजलं न धत्ते। इत्थं प्रियविरहवती अम्बुजमुखी यत् सन्तापं सहते तच्चेतोभवः वेद जानीते अन्तर्गतत्वात्तत्कृतत्वाच्चेति भावः। इह सखीकथनार्हतयाप्यकथनेन शयनाभावेन चेतोभवमात्रवेद्येन लज्जावत्त्वं ध्वन्यते ॥३९॥

---

१- दशावस्था इति पाठः – ग
२- बहती इति पाठः – ग
३- सृजती इति पाठः – ग

मध्या प्रोषितभर्तृका यथा–

**वासस्तदेव वपुषो वलयं तदेव**
**हस्तस्य सैव जघनस्य च रत्नकाञ्ची।**
**वाचालभृङ्गसुभगे सुरभौ समस्त –**
**मद्याधिकं भवति ते सखि ! किं निदानम् ॥४०॥**

हे सखि! वासो वस्त्रं तत्सार्वकालिकमेव हस्तस्य वलयं कंकणं तदेव, जघनस्य च रत्नकाञ्ची सैव। परन्तु वाचाला कुत्सितं गुञ्जन्तो भृङ्गास्तैस्सुभगे सुरभौ वसन्ते अद्य समस्तमधिकं भवति किं निदानं कारणम् इह तदित्यनेन सर्वदा देहस्थत्वादखेदवत्त्वं, वाचालत्वेन विरहपीडाजनकत्वं वसन्तेनोन्मादकत्वम् अधिकामिति सहनीयतया लज्जावत्त्वं किं निदानमिति प्रश्नेन मदनवत्त्वं च व्यज्यते ॥४०॥

प्रौढा प्रोषितभर्तृका यथा–

**माला बालाम्बुजदलमयी मौक्तिकी हारयष्टिः**
**काञ्ची याते प्रभवति हरौ सुभ्रुवः प्रस्थितैव।**
**अन्यद् ब्रूमः किमिह धमनी वर्तते वा न वेति**
**ज्ञातुं बाहोरहह वलयं पाणिमूलं प्रयाति ॥४१॥**

प्रभवति स्वामिनि हरौ कृष्णे याते सति सुभ्रुवो राधिकायाः बालाम्बुजमयीमाला हारयष्टिः मौक्तिकी काञ्ची तु प्रस्थितैव कटितटान्निःसृतैव। अन्यद्दुरवस्थानं किं ब्रूमः? धमनी वर्त्तते न वा इति ज्ञातुं पाणिर्वलयं अहहेति खेदे बाहुमूलं प्रकृष्टं शीघ्रं याति अस्थिचर्मावशेषाद्विरहपीडयेति भावः। इह बालाम्बुजदलमुक्तानां शीतलत्वेन[1] मालादीनां स्त्रीत्वात्सजातीयत्वेन च धारणयोग्यत्वेऽपि तेषां कोमलतया देहसम्बन्धे भस्मभिया[2] तत्त्यागादतीव विरहपीडा व्यज्यत इत्याहुः। यद्वा कृष्णे गते स्वाश्रयनायिकामरणं भावीतिमालादिभिरपि प्रस्थितमित्यप्याहुः ॥४१॥

---

१- अतीव तापवत्वं व्यज्यते। यद्वा प्रस्थितेति सर्वत्रान्वेति तेन बालाम्बुजमुक्तानां शीतलत्वेन–इत्यधिकः पाठः –ग

२- भस्मनिपातत्यागा० – ग

परकीया प्रोषितभर्तृका यथा–

श्वश्रूः पद्मदलं ददाति तदपि भ्रूसंज्ञया गृह्यते
सद्यो मर्मरशङ्कया न च पुनः संस्पृश्यते पाणिना।
यातुर्वाचि सुहृद्गणस्य वचसा प्रत्युत्तरं दीयते
श्वासः किन्तु न मुच्यते हुतवहक्रूरः कुरङ्गीदृशा ॥४२॥

कुरङ्गी हरिणी तस्या इव दृग्यस्यास्तया श्वश्रूस्तस्यै पद्मदलं ददाति तदपि भ्रूसंज्ञया भ्रूभंगेन गृह्यते। कुतस्सद्यो मर्मरः शुष्कता तस्य शंकया पुनः पाणिना न संस्पृश्यते। यातुः पतिभ्रातृपत्न्या वाचितया प्रश्ने कृते सुहृद्गणस्य सखीजनस्य वचसा प्रत्युत्तरं दीयते किन्तु हुतवहवत्क्रुरो दाहकः श्वासो न मुच्यते। अन्यथा प्राकट्यं स्यादिति भावः। श्वश्रूदत्तमपि न गृह्यते का वार्तान्यदत्ते इति व्याकुलत्वम् मर्मरशंकयेति किञ्चित्क्षणं करस्थाने भस्मैव स्यादिति तापवत्वात्कामुकत्वं यातुरिति। अन्यं प्रति प्रत्युत्तराभावश्च ध्वन्यते ॥४२॥

सामान्यवनिताप्रोषितभर्तृका यथा–

विरहविदितमन्तः प्रेम विज्ञाय कान्तः
पुनरपि वसु तस्मादेत्य मे दास्यतीति।
मरिचनिचयमक्ष्णोर्न्यस्य वाष्पोदबिन्दून्
विसृजति पुरयोषित् द्वारदेशोपविष्टा ॥४३॥

अन्तः प्रेमविरहविदितकान्तो विज्ञाय तस्माद्विदेशादेत्यागत्य पुनरपि मे मह्यं वसु द्रव्यं दास्यतीति हेतोः प्रेमाभावादरोदनेऽपि अक्ष्णोर्मरिचस्यनिचयं समूहं न्यस्य प्रवेश्य द्वारदेशोपविष्टा पुरयोषिद् वाष्पोदमश्रुजलं तद्बिन्दून्विसृजति त्यजति। द्वारेत्यनेन बहूनां दर्शनेन केनचित्तस्य निवेदनीयत्वं, पुरेति वस्तुतः प्रेमशून्यत्वं तेन धनप्रधानत्वं च व्यज्यते ॥४३॥

अन्यसम्भोगचिह्नितः प्रातरागच्छति पतिर्यस्याः सा खण्डिता।

प्रातरित्युपलक्षणम्

अस्याश्चेष्टा अस्फुटालाप-चिन्ता-सन्ताप-निश्श्वास-तूष्णीम्भावाऽश्रुपातादयः।

मुग्धा खण्डिता यथा–

वक्षः किमु कलशाङ्कित
मिति, किमपि प्रष्टुमिच्छन्त्याः।

**नयनं नवोढसुदृशः**

**प्राणेशः पाणिना पिदधे ॥४४॥**

अन्येति। अन्यस्यास्सम्भोग इत्यर्थः पतिरित्ययं नायकसामान्यपरः। एवमन्यत्रापि द्रष्टव्यः। नन्वन्यकालीनतादृशागमनेन स्यादत आहोपलक्षणमिति। स्वोक्तिमाह वक्षःकलशांकितमन्यकुचचित्रितं किमु इति किमपि प्रष्टुं इच्छन्त्या नवोढसुदृशः कान्ताया नयनं प्राणेशः कान्तः पाणिना पिदधे अच्छादयति स्म। इह किमपीत्यनेनास्फुटालापादिः कलशेन कुचानुपादानात् सन्तापादिश्च इच्छन्त्या न तु पृष्टवत्या इति लज्जावागभावश्च पाणिनैकत्वेन स्वतोरुद्धत्वादश्रुपातश्च व्यङ्ग्यः ॥४४॥

**मध्या खण्डिता यथा–**

**वक्षोजचिह्नितमुरो दयितस्य वीक्ष्य**

**दीर्घं न निःश्वसिति जल्पति नैव किञ्चित्।**

**प्रातर्जलेन वदनं परिमार्जयन्ती**

**बाला विलोचनजलानि तिरोदधाति ॥४५॥**

दयितस्य उरो वक्षो वक्षोजाभ्यां कुचाभ्यां चिह्नितं वीक्ष्य बाला षोडशहायनी दीर्घं यथा तथा न निःश्वसिति किञ्चित् वक्रं ऋजु वा नैव जल्पति किन्तु प्रातःकाले जलेन वदनं परिमार्जयन्ती क्षालयन्ती सती विलोचनजलानि तिरोदधाति गोपायति। इह दीर्घनिःश्वासाभावेन लज्जावत्त्वं जल्पनाभावेन नायकक्रोधाभावान्मदनवत्त्वं च व्यज्यते ॥४५॥

**प्रौढा खण्डिता यथा–**

**मामुद्वीक्ष्य विपक्षपक्ष्मलदृशः पादाम्बुजालक्तकै-**

**रालिप्ताननमानतीकृतमुखी चित्रार्पितेवाभवत्।**

**रूक्षं नोक्तवती न वा कृतवती निःश्वासकोष्णे दृशौ**

**प्रातर्मङ्गलमङ्गनाकरतलादादर्शमादर्शयत् ॥४६॥**

अन्योपभुक्ता कान्तोन्यकृतस्वावस्थामन्यं निवेदयति। विपक्षः शत्रुः साचासौपक्ष्मलदृक् च तस्याः सपत्न्याः पादाम्बुजयोरलक्तकं लाक्षातेनालिप्ताननं मामुद्वीक्ष्य आनतीकृतमुखी अङ्गनाचित्रार्पिता पटस्थाइवाभवत्। रूक्षं परुषं नोक्तवती दृशौ निःश्वासकोष्णे न वा कृतवती किन्तु करतलात् प्रातर्मङ्गलम् आदर्शं मुकुरं

मुकुरं सामामदर्शयत् चित्रसादृश्येन निर्गतप्राणतुल्यता मूढता रूक्षकथनेनास्फुटापलापः। दृक् तथाकरणेन सन्तापः। आदर्शदर्शनेन स्वयमेव स्वापराधं ज्ञायतां मत्कथनेन क्रोधादिना रतिविरामः स्यादिति रतिप्रीतिश्च व्यज्यते ॥४६॥

**परकीया खण्डिता यथा–**

**कान्तं निरीक्ष्य वलयाङ्कितकण्ठदेशं**
**मुक्तास्तया परभिया परुषा न वाचः।**
**दूतीमुखे मृगदृशा स्खलदम्बुपूरा**
**दूरात्परं निदधिरे नयनान्तपाताः ॥४७॥**

कान्तमिति। वलयेत्यन्यस्या इति भावः। अम्बुपूरा अश्रुपूर्णाः परं केवलमन्यत्सु बोध्यम्। इह वचनाभावेन गुप्तिः निर्वेदादिश्च स्फुटतरः ॥४७॥

**सामान्यवनिता खण्डिता यथा–**

**उरस्तव पयोधराङ्कितमिदं कुतो मे क्षमा**
**ततो मयि निधीयतां वसु पुरा यदङ्गीकृतम्।**
**इति प्रचलचेतसः प्रियतमस्य वारस्त्रिया**
**क्वणत्कनककङ्कणं करतलात् समाकृष्यते ॥४८॥**

उर इति। तवोरः पयोधराङ्कितमिदं मे कुतः सहनं ततः कारणान् मयि वसु धनं निःक्षिप्यतामित्येवं कम्पितमनसोऽप्यतः कम्पेन शब्दायमानं सुवर्णवलयं सुतरां प्रतिमोच्यते। इह मयीत्यसम्प्रदानेनायाच्ञाकरणादस्फुटालापादिः प्रचलेन प्रेमाभावात्तत्क्षणग्रहणाच्च धनप्रधानत्वं च व्यज्यते ॥४८॥

पतिमवमत्य पश्चात्परितप्ता कलहान्तरिता अस्याश्चेष्टा। भ्रान्तिसन्तापसम्मोहनिःश्वासज्वरप्रलापादयः

**मुग्धा कलहान्तरिता यथा–**

**अनुनयति पतिं च लज्जमाना**
**कथयति नापि सखीजनाय किञ्चित्।**
**प्रसरति मलयानिले नवोढा**
**वहति परन्तु चिराय शून्यमन्तः ॥४९॥**

भ्रान्तिर्मिथ्याज्ञानं सन्तापोऽनुतापो मोह इन्द्रियवैकल्यम्। मलयानिले प्रसरति

वहति सति नवोढा लज्जमाना पतिं नानुनयति सान्त्वयति सखीजनाय नापि किञ्चित्कथयति परन्तु चिराय चिरम्, अन्तर्मनः शून्यं प्रतिपत्तिरहितं वहति।

**इह सखीसमूहे एकस्या अप्यकथनेन**
**लज्जातिशयः मलयेन सौगन्ध्यं मनश्शून्य-**
**करणेन मिथ्याज्ञानादि च व्यज्यते ॥४९॥**

**मध्या कलहान्तरिता यथा–**

**विरमति कथनं विना न खेदः**
**सखि कथने समुपैति काऽपि लज्जा।**
**इति कलहमधोमुखी सखीभ्यो**
**लपितुमनालपितुं समाचकाङ्क्ष ॥५०॥**

हे सेखि ! कथनं विना खेदो न विरमति निवर्त्तते। निवेद्य दुःखं सुखीभवतीति न्यायात्। पुनः कथने कापि अवाच्या लज्जा समुपैति। इत्येवं प्रकारेणाधोमुखी नायिका सखिभ्यः कलहं लपितुमनालपितुं च समाचकांक्ष वाञ्छति स्म। वेनित्यावश्यकत्वान्मदनवत्ता कथनाकथनेन मदनलज्जोभयवत्ता व्यज्यते ॥५०॥

**प्रौढा कलहान्तरिता यथा–**

**अकरोः किमु नेत्र ! शोणिमानं**
**किमकार्षीः करपल्लवावरोधम्**
**कलहं किमधाः क्रुधा रसज्ञे**
**हितमर्थं न विदन्ति दैवदुष्टाः ॥५१॥**

**काचन परितप्ता स्वनेत्रादीन्प्रत्याह[1]–**
**हे नेत्र शोणिमानं त्वं किमु अकरोः।**
**हे करपल्लव अवरोधं किमकार्षीः।**

हे रसज्ञे जिह्वे क्रुधा कोपेन कलहं किं अधाः अकार्षीः नेत्रकराभ्यां तथा करणेऽपि रसज्ञत्वात्तवेदं सर्वथानुचितमिति भावः। अर्थान्तरन्यासमाह। हि यस्माद्दैवदुष्टा भाग्यहीना हितमर्थं न विदन्ति। इह स्वांगानां दुष्टत्वकथनेनातीव रतिप्रीतिर्ध्वन्यते ॥५१॥

---

१- प्रत्याहेत्याह क मातृका पठति।

**परकीया कलहान्तरिता यथा–**

**भर्तुर्यस्य कृते गुरुर्लघुरभूद्गोष्ठी कनिष्ठीकृता**
**धैर्यं कोशधनं गतं सहचरी नीतिः कृता दूरतः।**
**निर्मुक्ता तृणवत्रपा परिचिता स्रोतस्वती बिन्दुवत्**
**स क्रोधादवधीरितो हतधिया मातर्बलीयान् विधिः ॥५२॥**

**परितप्तायास्सखीं प्रति वाक्यमाह–**

स क्रोधाद्धतधिया मयावधीरितो नादृतः। अनादरहेतुमाह। मातर्विधिरदृष्टं बलीयानन्यदिष्टमनिष्टं करोतीत्यर्थः। यस्य भर्त्तुः कृते यदर्थं गुरुः श्वशुरपतिजनोलधुरपमानितोऽभूत्तथा गोष्ठी सभा मर्य्यादा कनिष्ठीकृता। कोशधनमन्तर्धनंधैर्य्यं गतं नष्टं सहचर्य्यपि नीतिर्दूरतः कृतेति नीतिरिव सखी त्यक्तेति वा तया त्रपा लज्जा तृणवन्निर्मुक्ता स्रोतस्वती महानदी विन्दुवत् परिचिता उत्तीर्णा एतादृशापि इह विधेर्बलीयस्त्वादि कथनं सन्तापादि व्यनक्ति ॥५२॥

**सामान्यवनिता कलहान्तरिता यथा–**

**यत्पङ्केरुहलक्ष्मपाणिकमले भाग्यालये यद्गुरु–**
**र्न्यस्तं वा मम यल्ललाटफलके भाग्याक्षरं वेधसा।**
**तत्सर्वं सखि ! यो यथार्थमकरोत्तस्मिन् प्रकोपः कृतो**
**धिङ् मां धिङ्मम जीवितं धिगतनुं धिक् चेष्टितं धिग्वयः ॥५३॥**

हे सखि ! वेधसा ब्रह्मणा मे पाणिकमले यत्पङ्केरुहलक्ष्म पद्मचिह्नं न्यस्तं भाग्यालये भाग्यभवने यद्गुरु न्यस्तंललाटफलके। यद्वा मम यत् सुन्दरौदार्य्यं भाग्याक्षरंन्यस्तं तत्सर्वं यथार्थं सत्यम् अकरोत्तस्मिन्मयाप्रकोपः कृत इदं महदनुचितमतो मां धिक्। एवं कोपेकृते जीवनमतीवानुचितमतोजीवनं मम धिक्। जीवनेऽपीदृशौदार्य्या भाववति नायिकान्तरे रतिरत्यन्तानुचिता अतो रतिजनकम् अतनुं कामं धिक्। ततः किमिति चेष्टा नायुक्तेति चेष्टा तां धिक्। ततो वयो धिक् इह तदित्यनेन धनप्राधान्यमनुतापादिकन्तु धिगित्यनेन व्यज्यते ॥५३॥

सङ्केतनिकेतने प्रियमनवलोक्य समाकुलहृदया विप्रलब्धा।

अस्याश्चेष्टा निर्वेद-निःश्वास सखीजनोपालम्भ चिन्ता-ऽश्रुपाता मूर्च्छादयः।

मुग्धा विप्रलब्धा यथा–

आलीभिः शपथैरनैककपटैः कुञ्जोदरं नीतया
शून्यं तच्च निरीक्ष्य विक्षुभितया न प्रस्थितं न स्थितम्।
न्यस्ताः किन्तु नवोढनीरजदृशा कुञ्जोपकण्ठे रुषा
भ्राम्यद् भृङ्ग कदम्बडम्बरचमत्कारस्पृशो दृष्टयः ॥५४॥

निर्वेदः स्वावमाननम्, उपालम्भस्सनिन्दपरिभाषणं, चिन्ता अनागमनविषयां स्वोक्तिमाह। अनेककपटै शपथैःआलीभिस्सखीभिः कुञ्जोदरं वनमध्यं नीतया नवोढनीरजदृशा तच्च गृहं शून्यं प्रियरहितं निरीक्ष्यातो विक्षुभितयाविमनस्कया सत्या न प्रस्थितं प्रियगमनसम्भावनयेति भावः। न च स्थितं प्रियाभावाद् दुःखदत्वादिति भावः। किन्तु कुञ्जोपकण्ठे रुषा क्रोधेन भ्राम्यन्तो भृङ्गास्तेषां कदम्बं समूहस्तस्य डम्बरस्सम्भ्रमस्तस्य चमत्कारश्चातुर्यं तत्स्पृशो दृष्टयः कटाक्षा व्यस्ताः। इह स्थितिसंशयेन निर्वेदादिः रुषेत्यादिनोपालम्भादि सखीर्विहाय कुञ्जे तथा दृष्टि करणेन लज्जातिशयश्च ध्वन्यते ॥५४॥

मध्या विप्रलब्धा यथा–

सङ्केतकेलिगृहमेत्य निरीक्ष्य शून्य–
मेणीदृशो निभृतनिश्श्वसिताधरायाः
अर्धाक्षरं वचनमर्धविकासि नेत्रं
ताम्बूलमर्धकवलीकृतमेव तस्थौ ॥५५॥

सङ्केतेतिस्फुटार्थम्। इह निभृतेन लज्जावत्ता अर्द्धेत्यादिना विस्मयान्मदनवत्ता स्थानेन निर्वेदादिश्च ॥५५॥

प्रोढा विप्रलब्धा यथा–

शून्यं कुञ्जगृहं निरीक्ष्य कुटिलं विज्ञाय चेतोभवं
दूती नापि निवेदिता सहचरी पृष्टाऽपि नो वा तया
शम्भो! शङ्कर! चन्द्रशेखर! हर! श्रीकण्ठ! शूलिन्! शिव!
त्रायस्वेति परन्तु नीरजदृशा भर्गस्य चक्रे स्तुतिः ॥५६॥

नीरजदृशा तया नायिकया कुञ्जगृहं शून्यं निरीक्ष्य चेतोभवं कामं कुटिलं विज्ञाय च दूतीनिवेदितापि ततो वा सहचरी दृष्टा परन्तु भर्गस्य शिवस्य स्तुतिञ्चक्रे शम्भो इत्यादिना। इह दूतीनिवेदनसखी पृच्छानाकरणेन तन्मध्ये मरणभिया

शीघ्रतरस्तुत्या विरहकातरतरत्वाद्रतिप्रीतिर्व्यज्यते। शम्भोशंकरेति। आदरार्थमुभयम्। चन्द्रशेखरत्वेन चन्द्रस्य त्वदधीनत्वात्तत्कृतपीडानाशे कामकृतापि नष्टैवेति। हरत्वेन कामहरत्वं श्रीकण्ठत्वेन सकललोकानुकुलत्वात्पीडानिवारणावश्यकत्त्वं शूलित्वेन दग्धोऽपि कामः सम्यक् शूलेन जहि हन्तव्य इति मूलच्छेदत्वं शिवत्वे सर्वथैवं करणीयत्वमिति च व्यज्यते ॥५६॥

**परकीया विप्रलब्धा यथा–**

**दत्त्वा धैर्यभुजङ्गमूर्ध्नि चरणावुल्लङ्घ्य लज्जानदी-**
**मङ्गीकृत्य घनान्धकारपटलं तन्व्या न दृष्टः प्रियः।**
**सन्तापाकुलचित्तया च परितः पाथोधरे गर्जति**
**क्रोधाक्रान्तकृतान्तमत्तमहिषभ्रान्त्या दृशौ योजिते ॥५७॥**

धैर्य्यमेव भुजङ्गमेवमग्रेपि। तस्य मूर्ध्नि चरणौ दत्त्वा। लज्जानदीमुल्लंघ्य घनान्धकारस्य पटलं समूहमङ्गीकृत्य तन्व्या प्रियो न दृष्टोऽतस्सन्तापाकुलचित्तयापरितः पाथोधरे मेघेगर्जति तस्मिन् क्रोधाक्रान्तो यः कृतान्तो यमस्तस्य मत्तो महिषस्तस्य भ्रान्त्या दृशौ नेत्रे योजिते। इह भुजङ्गादिषु चरणादि धारणादिना निर्वेदादिः। यमगृहयानशंका तु पुंश्चल्या दुर्गतिं व्यनक्ति तेन परकीयात्वम् सन्तापाकुलत्वेन परपुरुषेऽनुरागः ॥५७॥

**सामान्यवनिता विप्रलब्धा यथा–**

**कपटवचनभाजा केनचिद्वारयोषा**
**सकलरसिकगोष्ठीवञ्चिका वञ्चिताऽसौ।**
**इति विहसति रिङ्गद्भृङ्गविक्षिप्तचक्षु-**
**र्विकचकुसुमकान्तिच्छद्मना केलिकुञ्जः ॥५८॥**

कपटेति कपटयुक्तं वचनं भजति तेन केनचित्पुंसासौ सकलरसिकानां गोष्ठी सभा तस्या वञ्चिका प्रतारणाकर्त्रीवारयोषिद्वंचिता इति हेतोरिंगन्तश्चलन्तो भृङ्गा एव विक्षिप्ते चक्षुषी येन तादृशः। केलिकुञ्जः विकचानि विकसितानि कुसुमानि तेषां शोभाव्याजेन विहसति। कपटेन निर्वेदादिर्वञ्चने न प्रेयस्यागतेऽपि धननिःक्षेपाद्धनप्राधान्यम् ॥५८॥

सङ्केतस्थलं प्रति भर्तुरनागमनकारणं चिन्तयन्ती उत्का।

अस्याश्चेष्टा-अरति-सन्ताप-जृम्भाङ्गाकृष्टि–कपटरुदितस्वावस्थाकथनादयः

**मुग्धा उत्कायथा–**

**यन्नाद्यापि समागतः पतिरिति प्रायः प्रपेदे परा-**
**मित्थं चेतसि चिन्तयन्त्यपि सखीं न व्रीडया पृच्छति**
**दीर्घं निःश्वसितं दधातिचकितं न प्रेक्षते केवलं**
**किञ्चित्पक्वपलाण्डुपाण्डुररुचिं धत्ते कपोलस्थलीम् ॥५९॥**

यत् अद्यापि पतिर्नसमागतः इति हेतोः प्रायो बहुधा परांकान्तां प्रपेदे प्राप्तवान्। इत्थं चेतसि चिन्तयन्ती अपि सखीं व्रीडया इदमग्रेपि न पृच्छति। दीर्घं निःश्वसितं दधाति चकितं न प्रेक्षते केवलं। किन्तु कपोलस्थलीं किञ्चित् पक्वं पलाण्डुशब्देन तत्पत्रं तद्वत्पाण्डुरा पिञ्जरा रुचिर्यस्यास्तादृशीं धत्ते। इहाद्यापीत्यादिना रत्यादिः सख्य प्रश्नेन लज्जातिशयः निश्श्वसितेन रुदितं च। किंचिदित्यादिना सन्तापादिश्च व्यज्यते ॥५९॥

**मध्या उत्का यथा–**

**आनेतुं न गता किमु प्रियसखी भीतो भुजङ्गात्किमु?**
**क्रुद्धो वा प्रतिषेधवाचि किमसौ प्राणेश्वरो वर्त्तते।**
**इत्थं कर्णसुवर्णकेतकरजः पातोपघातच्छला-**
**दक्ष्णोः काऽपि नवोढनीरजमुखी बाष्पोदकं मुञ्चति ॥६०॥**

प्रियसखी कान्तमानेतुं गता किमु काक्वा गतैव। भुजङ्गात् सर्पाद्भीतः किमु प्रतिषेधवाचि क्रुद्धोवासौ प्राणेश्वरोजीवितनाथो वर्तते किमु। इत्थमनागमनकारण भावेन कर्णयोस्सुवर्णवत्केतकानि तद्रजसां पातः प्रवेशस्तस्योपघातस्यछलाद्व्याजात् कापि नवोढा चासौ नीरजमुखी च। नवोढापिमध्यासदृशीत्यभिमानः। यद्वा कमलेऽन्वेतीत्याहुः साक्ष्णोर्वाष्पोदकं मुञ्चति। इह सख्या अस्तगमनसम्भावनया प्रियस्य भया भावनया च तयोरपि कामुकत्वज्ञापनेन सखीप्रेषणेन च स्वस्मिन्मदनवत्त्वं कर्णेत्यादिना सन्तापवत्त्वं लज्जावत्वं च व्यज्यते ॥६०॥

**प्रौढोत्का यथा–**

**भ्रातर्निकुञ्ज! सखि यूथि! रसालबन्धो।**
**मातस्तमस्विनि! पितस्तिमिर! प्रसीद।**
**पृच्छामि किञ्चिदिति नीरधराभिरामो**
**दामोदरः कथय किं न समाजगाम ॥६१॥**

हे निकुञ्जभ्रातः! हे यूथि जूहि सखि! हे रसालाम्रबन्धो! हे तमस्विनि रात्रि मातः! हे तिमिरान्धकार पितः त्वं प्रसीद। अहमिति किञ्चित्पृच्छामि। नीरधराभिरामो दामोदरः कथं न समाजगाम त्वं कथय। इहाचेतननिकुञ्जादिसम्बोधनेन व्याकुलत्वात्सन्तापादिः नीरेत्यादिना सौन्दर्यवर्णनाद्रति-प्रीतिर्व्यज्यते चिन्ता स्फुटैव ।।६१।।

**स्नातं वारिदवारिभिर्विरचितो वासो घने कानने**
**शीतैश्चन्दनबिन्दुभिर्मनसिजो देवः समाराधितः।**
**नीता जागरणव्रतेन रजनी व्रीडा कृता दक्षिणा**
**तप्तं किं न तपस्तथापि स कथं नाद्यापि नेत्रातिथिः ।।६२।।**

सखीं प्रति सखीवाक्यमाह। मया किं न तपस्तप्तं तपस्विवन्मयापि कृतमिति भावः। तथापि स कथमद्यापि मे नेत्रातिथिर्गोचरः न, तपएवाह। वारिदानं मेघानां वारिभिर्मया स्नातं घने निविडे कानने वासो विरचितः। शीतैश्चन्दनबिन्दुभिर्मनसिजो देवस्समाराधितः जागरणव्रतेन रजनी रात्रिर्नीता व्यतीता व्रीडा दक्षिणाकृता इह वारिदेन पथिगमनक्लेशः घनत्वेन निर्जनत्वं भयवत्त्वं च चन्दनपूजनेन संस्कारः जागरणसमुत्कृतेन क्लेशः व्रीडेति इति प्रवन्धकत्यागेन? सुरतौचित्यं च व्यज्यते। ।।६२।।

**सामान्यवनितोत्का यथा–**

**कथं न कान्तः समुपैति कुञ्ज-**
**मित्थं चिरं चेतसि चिन्तयन्ती।**
**अस्रावयन्निष्पतदश्रुधारा-**
**वाराङ्गना काऽपि धनाभिलाषात् ।।६३।।**

कथं न कान्त इति स्फुटार्थम् ।।६३।।

अद्य मे प्रियवासर इति निश्चित्य या सुरतसामग्रीं सज्जीकरोति, सा वासकसज्जा वासको वारः।

**अस्याश्चेष्टा मनोरथ-सखीपरिहास-**
**दूतीप्रश्न–सामग्री-सम्पादन-मार्गविलोकनादयः।**

**मुग्धा वासकसज्जा यथा–**

**हारं गुम्फति तारकातिरुचिरं ग्रथ्नाति काञ्चीलतां**

दीपं न्यस्यति किन्तु तत्र बहुलं स्नेहं न धत्ते पुनः।
आलीनामिति वासकस्य रजनी कामानुरूपां क्रियां
साचिस्मेरमुखी नवोढसुमुखी दूरात्समुद्वीक्षते ॥६४॥

नवोढसुमुखी तारकावदतिरुचिरं कान्तीति। पाठे ताराशुद्धाकान्तिस्तया रुचिरं मनोहरं हारं ग्रथ्नाति स्फुटमग्रे। बहलं बहुलं स्नेहतैलमित्यनेन प्रकारेण वासकस्य रजनौ रात्रौ आलीनां क्रियां गूढामिति शेषः। क्रियां सामग्रीसम्पत्तिं कामानुरूपां इच्छायोग्यां कुर्वन्ती सा विदूरात्समुद्वीक्षते मार्गमिति शेषः। इहैष तैलधारणेन लज्जातिशयो व्यङ्ग्यः स्फुटतर एव मनोरथादिः ॥६४॥

मध्या वासकसज्जा यथा–

शिल्पं दर्शयितुं करोति कुतुकात् कल्हारहारस्रजं
चित्रप्रेक्षणकैतवेन किमपि द्वारं समुद्वीक्षते
गृह्णात्याभरणं नवं सहचरी भूषाजिगीषामिषा-
दित्थं पद्मदृशः प्रतीत्य चरितं स्मेराननोऽभूत्स्मरः ॥६५॥

शिल्पं कलाकौशलं दर्शयितुं कुतुकाद्व्याजात्कल्हाराणां पद्मानां हारवन्मुक्तावलीवत्स्रजं मालां करोतिचित्रं द्वारस्थं तस्यप्रेक्षणकैतवात्दर्शन व्याजात्किमपीषद् द्वारं समुद्वीक्षते। सहचरी भूषाणां जिगिषायामिषान्नवम् आभरणं गृह्णाति। इत्थं पद्मदृशः चरितं कृत्यं प्रतीत्य ज्ञात्वा स्मरः स्मेराननोऽभूत्। इह किमपीत्यनेन कैतवेन च लज्जाभूषणोत्सवेन मदनो व्यङ्ग्यः सामग्री सम्पत्तिः प्रकटैव ॥६५॥

प्रगल्भा वासकसज्जा यथा–

कृतं वपुषि भूषणं चिकुरधोरणी धूपिता
कृता शयनसन्निधौ क्रमुकवीटिकासम्भृतिः।
अकारि हरिणीदृशा भवनमेत्य देहत्विषा
स्फुरत्कनककेतकी कुसुमकान्तिभिर्दुर्दिनम् ॥६६॥

हरिणीदृशा नायिकया वपुषि भूषणं कृतं चिकुराणां केशानां धोरणी समूहो धूपिता धूपेन संस्कृता शयनसन्निधौ क्रमुकाणि पूगीफलानि च वीटिकास्ताम्बूल समुदायाश्च तासां संभृतिः सञ्चयः कृता तथा भवनं गृहमेत्यागत्य देहत्विषाकरणेन स्फुटन्त्यः कनकवत्केतक्यस्तासांकुसुमानि तेषां कान्तिभिदुर्दिनमाच्छन्नमकारि कृतम्।

इह भूषादि करणेन रतिप्रीतिः भवता गमनेनमार्गावलोकनादिश्च व्यज्यते ॥६६॥

**परकीया वासकसज्जा यथा–**

**श्वश्रूं स्वापयतिच्छलेन च तिरोधत्ते प्रदीपाङ्कुरं**
**धत्ते सौधकपोतपोतनिनदैः साङ्केतिकं चेष्टितम्।**
**शश्वत्पार्श्वविवर्तिताङ्गलतिकं लोलत्कपोलद्युति**
**क्वापि क्वापि कराम्बुजं प्रियधिया तल्पान्तिके न्यस्यति ॥६७॥**

कापि कान्ताच्छलेन श्वश्रूं स्वापयति प्रदीपाङ्कुरं तिरोधत्ते आच्छादयति सौधे गृहे कपोतपोतानां निनदैः साङ्केतिकं चेष्टितं धत्ते। पुनः शश्वन्निरन्तरं पार्श्वाभ्यां विवर्त्तिताङ्गलतिका यस्मिन् कर्म्मणि तथा लोलन्ती प्रचलन्ती कपोलयोर्द्युतिर्यस्मिन् तथा। प्रियधिया ज्ञानबुद्ध्या क्वापि तल्पान्तिके कराम्बुजं न्यस्यति दधाति। इह स्वापनादिक्रियया मनोरथादिः कपोतादिनाऽप्रकटानुरागो व्यज्यते ॥६७॥

**सामान्यवनिता वासकसज्जा यथा–**

**चोलं नीलनिचोलकर्षणविधौ चूडामणिं चुम्बने**
**याचिष्ये कुचयोः करार्पणविधौ काञ्चीं पुनः काञ्चनीम्।**
**इत्थं चन्दनचर्चितैर्मृगमदैरङ्गानि संस्कुर्वती**
**तत्किं यन्न मनोरथं वितनुते वारेषु वाराङ्गना ॥६८॥**

नीलं निचोलम् उपरितनं पटं तस्य कर्षणविधौ काञ्चनीं सौवर्णीं काञ्चीं याचिष्ये। इत्थं धिया चर्चितैर्मृगमदैः कस्तूरिकाभिरङ्गानि संस्कुर्वती वाराङ्गना। तत्किं यन्मनोरथं वारेषु युवसु न वितनुते अपि सर्वमित्यर्थः। इह चोलादिसंप्राप्त्यैवाङ्गसंस्कारकरणेन धनलोलुभ (प)त्वं सामग्रीसम्पादनमतिरोहितम्॥६८॥

**सदाज्ञाकर-प्रियतमा स्वाधीनपतिका।**

**अस्याश्चेष्टा वनविहारमदनमहोत्सवमदाहंकारमनोरथावाप्तिप्रभृतयः।**

**मुग्धा स्वाधीनपतिका यथा–**

मध्ये न क्रशिमा स्तने न गरिमा देहे न वा भंगिमा
श्रोणौ न प्रथिमा गतौ न जडिमा नेत्रे न वा वक्रिमा
लास्ये न द्रढिमा न वाचि पटिमा हास्ये न वा स्फीतिमा
प्राणेशस्य तथापि मज्जति मनो मय्येव किं कारणम् ॥६९॥

वनेति। मदोहर्षोत्कर्षः अहंकारस्स्वस्मिन्नन्याधिकत्वबुद्धिरित्यर्थः। सखीं प्रति सखीवाक्यमुदाहरति। हे सखि! यद्यपि मम मध्ये कटितटे क्रशिमा कृशत्वं तच्चातीव स्पृहणीयं तन्नास्ति तथापि प्राणेशस्य मनो मय्येव नान्यत्र मज्जति लीनं भवति। अत्र किं कारणम्। एवमग्रेऽपि योज्यम्। अवश्यं तर। मनोमज्जनेनाहंकारादयो गता इत्यादिना वनविहारादिः किमिति प्रश्नेन लज्जातिशयश्च ध्वन्यते ॥६९॥

**मध्या स्वाधीनपतिका यथा–**

**यदपि रतिमहोत्सवे नकारो**
**यदपि करेण च नीविधारणानि।**
**प्रियसखि! पतिरेष पार्श्वदेशं**
**तदपि न मुञ्चति तत्किमाचरामि ॥७०॥**

हे प्रियसखि! यदपि रतौ महोत्सवे क्रीडौत्सुक्ये नकारोऽस्ति। तथापि एषः पतिः पार्श्वदेशं न विमुञ्चति चेत्तर्हिकिमाचरामि। एवमग्रेऽपि इहोत्सवत्वेन निषेधायोग्यत्वान्मदनवत्त्वं किमित्यनेन लज्जावत्त्वं च व्यज्यते महोत्सवादिकं तु स्फुटमेव ॥७०॥

**प्रौढा स्वाधीनपतिका यथा–**

**वक्त्रस्याधरपल्लवस्य वचसो हास्यस्य लास्यस्य वा**
**धन्यानामरविन्दसुन्दरदृशां कान्तस्तनोति स्तुतिम्।**
**स्वप्नेनापि न गच्छति श्रुतिपथं चेतः पथं दृक्पथं**
**काऽप्यन्या दयितस्य मे सखि! कथं तस्यास्तु भेदग्रहः ॥७१॥**

हे सखि! दयितस्य सुन्दरौदार्य्यधुर्य्यापि कान्ता स्वप्ने नापि किमुत जागरे सावधाने श्रुतिपथं चेतः पथं न गच्छति। अतो मे तस्य भेदग्रहः कथमस्तु एकीभावे एव युज्यते इत्यर्थतोऽभेदएव शब्दतोऽपि मे तस्येति च भेदाभावात् षष्ठी। कथमपि तु सोऽहमिति युज्यत इति रतिप्रीतिः पूर्वार्द्धम् तिरोहितार्थम् लास्यस्य नर्त्तनादेः ॥७१॥

**परकीया स्वाधीनपतिका यथा–**

**स्वीयाः सन्ति गृहे सरोरुहदृशो यासां विलासक्वणत्**
**काञ्चीकुण्डलहेमकङ्कणचमत्कारो न विश्राम्यति।**
**को हेतुः? सखि! कानने पुरपथे सौधे सखीसन्निधौ**

**भ्राम्यन्तीमपि बल्लभस्य परितो दृष्टिर्न मां मुञ्चति ।।७२।।**

हे सखि! स्वीया गृहे सन्ति यासां विलासेन क्वणत्काञ्चीकुण्डलहेमकङ्कणं च तेषां चमत्कारो न विश्राम्यति। निरन्तरं तेषां शब्दस्तेन स्पृहणीयतातिशयः तथापि कानने विलासवने पुरपथे नगरमार्गे सौधे उच्चासने सखीसन्निधौ नायिका संमत्तेऽपि भ्रमन्तीं मां वल्लभस्य प्राणप्रेयसः दृष्टिर्नमुञ्चति तेन गत्यानुरागोऽहंकारादिश्च व्यङ्ग्यः ।। ७२।।

**सामान्यवनिता स्वाधीनपतिका यथा–**

**सन्त्येव प्रतिमन्दिरं मृगदृशो यासां सुधासागरः**
**स्रोतः स्यूतसरोजसुन्दरचमत्कारा दृशोर्विभ्रमाः।**
**चित्रं किन्तु विचित्रमन्मथकलावैदग्ध्यहेतोः पुन-**
**र्वित्तं चित्तहरं प्रयच्छति युवा मय्येव किं कारणम् ।।७३।।**

प्रतिमन्दिरं गृहे गृहे मृगदृशो वल्लभाः सन्त्येव यासां दृशो र्विभ्रमाः कटाक्षविलासाः सुधायास्सागरो जलधिस्तत्र स्रोतसि झर्झरे स्यूतं लग्नं सरोजं तद्वत्सुन्दराश्चमत्कारा येषु तादृशाः किन्तु विचित्रा मन्मथस्य कलाक्रीडा रसस्तस्या वैदग्ध्यं चातुर्य्यं तस्य हेतोः वित्तहरं वित्तं धनं मय्येव प्रयच्छति किं कारणं इह पूर्वार्द्धेन सुभग बह्वङ्गनापेक्षया विचित्रेत्यादिना स्वस्मिन् व्यतिरेकः अन्या वित्तदानेनैवसुलभा अपि ततोऽप्यधिक धनदानेनापि मयि रतिमपेक्षत इत्यहोमहोत्साहेन किमित्यादरेण प्रश्नेन ततोव्यतिरेकस्स्वाधीनत्वं मदादिश्च व्यज्यते ।।७३।।

**स्वयमभिसरति प्रियमभिसारयति साऽभिसारिका।**

**अस्याश्चेष्टाः समयानुरूपवेषभूषण-शङ्का-प्रज्ञानैपुण्य-प्रकट-साहसादय इति परकीयायाः।**

**स्वीयायास्तु प्रकृत एव क्रमः।**

**मुग्धाऽभिसारिका यथा–**

**दूती विद्युदुपागता सहचरी रात्रिश्चिरस्थायिनी**
**दैवज्ञो जलदस्वनेन दिशति प्रस्थानवेलां शुभाम्।**
**वाचं माङ्गलिकीं तनोति तिमिरस्तोमोऽपि झिल्लीरवै-**
**र्जातोऽयं दयिताभिसारसमयो मुग्धे विमुञ्च त्रपाम् ।।७४।।**

समयेति। नीलश्वेतादिवेषः कृत्रिमाकारः प्रज्ञानैपुण्यं बुद्धिचातुर्य्यं प्रकृत इति

न तूक्तः वस्तुतस्तु स्वीयाया अपि गुरुजनप्रतिबन्धादिना स्थलाभावेरत्यभावेनादौ संकेतकरणे लज्जावशादात्मगोपनाय तथा वेषादिकं युक्तमेवेति भट्टाः। परं त्वनेन प्रकारेण स्वीयाया अप्रकटानुरागोऽस्ति पुरुषे तदुच्छेदस्स्यात्, तस्मान्मूलोक्तमेव युक्तमिति प्रतीमः। हे मुग्धे त्रपां लज्जां विमुञ्चेति स्फुटार्थमन्यत्। न नु दूत्याद्यभावे कथं गन्तव्यमित्याशंक्याहदूतीत्यादि एवमग्रेपि ॥७४॥

**मध्याऽभिसारिका यथा–**

**भीताऽसि नैव भुजगात्पथि मद्भुजस्य**
**सङ्गे पुनः किमपि कम्पमुरीकरोषि।**
**अम्भोधरध्वनिभिरक्षुभिताऽसि तन्वि**
**मद्वाचि साचिवदनाऽसि किमाचरामि ॥७५॥**

हे तन्वि! पथि भुजगान्नैव भीतासि मद्भुजस्य सङ्गे कम्पं पुनः किमु करोषि। अम्भोधराणां ध्वनिभिरक्षुभिता न संचलितासि मद्वाचि वचने साचिवदना वक्राननासि किमाचरामि इह भुजगाभयान्मदनवत्ता साहसादयश्च वक्रकरणेन लज्जावत्ता च व्यज्यते ॥७५॥

**प्रगल्भाभिसारिका यथा–**

**स्फुरदुरसिजभारभङ्गुराङ्गी**
**किसलयकोमलकान्तिना पदेन**
**अथ कथय कथं सहेत गन्तुं**
**यदि न निशासु मनोरथो रथः स्यात् ॥७६॥**

स्फुरन्तौ चलन्तौ उरसिजौ कुचौ तयोभरिण भङ्गुराणि भङ्गशीलान्यङ्गानि यस्याः सा नायिका किसलयं नवदलं तद्वत् कोमलकान्तिना पदेन चरणेन निशासु गन्तुं कथं सहेत। अथ यदि मनोरथोऽभिलाषोरथः प्रापको न स्यात्। इह भङ्गुरत्वादिना बहिर्देहदुश्शक्यगमनत्वेऽपि मनोरथस्यान्तरस्य प्रयोजकत्वादतिशयित-रतिप्रीतिर्व्यज्यते ॥७६॥

**परकीयाऽभिसारिका यथा–**

**रभसादभिसर्तुमुद्यतानां**
**वनितानां सखि! वारिदो विवस्वान्।**
**रजनी दिवसोऽन्धकारमर्चि–**

विपिनं वेश्म विमार्ग एव मार्गः ॥७७॥

हे सखि! रभसादतिवेगादभिसर्त्तुमुद्यतानां वनितानां विवस्वान् प्रकाशको वारिद एव, रजनी रात्रिरेव दिवसः, अन्धकार एवार्चिर्ज्योतिः, विपिनं वनमेव वेशमगृहं विमार्गो विपथ एव मार्गः पन्थाः। एवञ्चान्यगमनानर्हसमयादिकस्यैवासां गमनादियोग्यत्वेनाप्रकटानुरागो भूषाप्रज्ञानैपुण्यादिश्च व्यज्यते ॥७७॥

ज्योत्स्नाऽभिसारिका यथा–

चन्द्रोदये चन्दनमङ्गकेषु
विहस्य विन्यस्य विनिर्गतायाः।
मनो निहन्तुं मदनोऽपि बाणान्
करेण कौन्दान् विभरांबभूव ॥७८॥

चन्द्रोदयेऽङ्गकेषु चन्दनं विन्यस्येति स्फुटार्थम्। मनो निहन्तुं कान्तं प्रतिगमयितुं कुन्दान् विकासयति स्मेति भावः ॥७८॥

दिवाभिसारिका यथा–

पल्लीनामधिपस्य पङ्कजदृशां पर्वोत्सवामन्त्रणे
जाते सद्मजना मिथः कृतमहोत्साहं पुरः प्रस्थिताः।
सव्याजं स्थितयोर्विहस्य गतयोः शुद्धान्तमत्रान्तरे
यूनोः स्विन्नकपोलयोर्विजयते कोऽप्येष कण्ठग्रहः ॥७९॥

पल्लीनां (पल्ली) जनवासग्रामस्तदधिपस्य तदीयपंकजदृक् सम्बन्धि कौतुकाद्युत्सवादिरूपपर्वोत्सवस्यामन्त्रणे याते सति स्व गृहस्थानामिति शेषः। गृहजनाः मिथः परस्परं कृतमहोत्साहाः पुनः अग्रे प्रथिताः अत्रान्तरे तत्समये सव्याजं किंचिद्व्यपदिश्य स्थितयोरिह स्वशुद्धान्तम् अन्तः पुरं गतयोर्यूनोः स्विन्नकपोलयोः कोऽपि विलक्षणः कण्ठग्रहः आश्लेषो विजयते इह दिवाभिसारः स्फुटः ॥७९॥

सामान्यवनिताऽभिसारिका यथा–

लोलच्चोलचमत्कृतिप्रविलसत्काञ्चीलताझङ्कृति
न्यञ्चत्कञ्चुकबन्धबन्धुरचलद्वक्षोजकुम्भोन्नति-
स्फूर्जद्दीधिति विस्फुरद्गति चलच्चामीकरालङ्कृति
क्रीडाकुञ्जगृहं प्रयाति कृतिनः कस्यापि वाराङ्गना ॥८०॥

वाराङ्गना वेश्या कस्यापि विरलस्य सुकृतिनो भाग्यवतः क्रीडायाः कुञ्जमेव गृहम् एव यथा स्यात् तथा प्रयाति अभिसरति कथं लोलं चलद्यच्चोलं कञ्चुकं तस्य चमत्कृतिर्यत्र तत्। प्रविलसन्त्याः काञ्चीलतायाः झंकृतिर्यत्र न्यञ्चन् गाढो नीचैर्गच्छन् वा कञ्चुकस्य बन्धस्तेन बन्धुरा नम्रा अतएव चलन्ती तिर्यक् प्रसरिणी वक्षोजकुम्भयोरुन्नतिर्यत्र। स्फुर्जन्तीदीधितिः शोभा यत्र। विस्फुरन्ती शीघ्रगतिर्यत्र। चलन्ती चामीकरस्य सुवर्णस्यालङ्कृतिर्भूषा यत्र। इहैवं विविधसमाजभाजकृतया गमनेन कस्य सम्पत्तिप्रपन्नस्येत्यनेन धनाभिलाषो ध्वन्यते ॥८०॥

मुग्धाया लज्जाप्राधान्येन, मध्याया लज्जामदनसाम्येन, प्रगल्भायाः प्रकाश्यप्राधान्येन, धीराया धैर्य्यप्राधान्येन, अधीराया अधैर्यप्राधान्येन धीराधीराया धैर्य्याधैर्यप्राधान्येन, ज्येष्ठायाःस्नेहाधिक्यप्राधान्येन, कनिष्ठायाः स्नेहन्यूनत्वप्राधान्येन, परोढायाः संगुप्तिप्राधान्येन, मुग्धाया इव कन्यकायाः सामान्यवनिताया धनप्राधान्येनाष्टनायिकावर्णनमिति विशेषः।

**प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं**

**धृत्या न क्षणमास्थितं व्यवसितं बुद्ध्याऽपि गन्तुं पुरः।**

**यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता**

**गन्तव्ये सति जीवित! प्रियसुहृत्सार्थः किमु त्यज्यते ॥८१॥**

उक्तानां मर्यादां समुच्चिनोति-मुग्धेत्यादिना प्रकाशे तस्य रतेरित्यादिः। अष्टेति इदं च प्रतिवादिवचनावसरार्थम्। तदेवाह प्रेक्षि। हे जीवित! वलयैः प्रस्थानं कृतं प्रियस्य सखायोऽस्रा अस्राणि तैरजस्रं निरन्तरं गतं धृत्या क्षणमपि न स्थितं पुनश्चित्तेन गन्तुं व्यवसितमुद्युक्तं एते सर्वे निश्चलचेतसि प्रियतमे सति समम् एककालमेव प्रस्थिताः कुतः गन्तव्ये प्रिये सति देहत्यागोऽवश्यं भावीतिसंगः किमर्थे त्याज्य इति भावस्तदाह प्रियसुहृत्सार्थस्संगः किमु त्यज्यते इति नायकोक्तिः ॥८१॥

इत्यादि प्राचीनलेखनादग्रिमक्षणे देशान्तरे निश्चितगमने प्रेयसि प्रोष्यत्पतिकापि नवमी नायिका भवितुमर्हति।

तथा हि प्रोषितपतिका-विप्रलब्धोत्कासु नान्तर्भावः भर्तुः सन्निधिवर्तित्वात्। न कलहान्तरितायामन्तर्भावः, प्रियस्योपभोगचिह्नं तस्यागमनाभावात्, प्रियायाः कोपाभावदर्शनात्, काकुवचन-कातरप्रेक्षणादि-सूचितान्तः पक्षपातदर्शनाच्च न वासकसज्जायामन्तर्भावः, वासरनियमाभावात्, सज्जीकरणभावनिर्वेदादि दर्शनाच्च। न वा स्वाधीनपतिकायामन्तर्भावः अग्रिमक्षण एव सङ्गविच्छेददर्शनात्। न हि

स्वाधीनपतिकायाः कदाचिदपि सङ्गविच्छेद इति संप्रदायः। व्रजन्नपि पतिः स्वाधीनपतिकया निरुध्यते। अन्यथा भर्तरि स्वाधीनत्वमेव तस्या भज्येत। नेह तथा, सर्वथा भर्तुर्विदेशगमनात्। किञ्च निर्वेदाश्रुपातनिश्वासवनविहारादि मदनमहोत्सवव्यतिरेकदर्शनाच्च। नाप्यभिसारिकायामन्तर्भावः, अभिसारोत्सवाभावात् अन्तस्तापदर्शनाच्चेति युक्तमुत्पश्यामः। लक्षणन्तु-यस्याः पतिरग्रिमक्षणे देशान्तरं यास्यत्येव सा प्रोष्यत्पतिका।

अस्याश्चेष्टाः काकुवचन-कातर–प्रेक्षण-गमन-विघ्नोपदर्शन निर्वेदसन्ताप संमोह निःश्वाशवाष्पादयः।

**मुग्धा प्रोष्यत्पतिका यथा–**

**प्राणेश्वरे किमपि जल्पति निर्गमाय**
**क्षामोदरी वदनमानमयाञ्चकार।**
**आली पुनर्निभृतमेत्य लतानिकुञ्ज-**
**मुन्मत्तकोकिलकलध्वनिमाततान ॥८२॥**

प्राचीनलेखनेति। अनेन प्रोषित पतिकेति अयुक्तः शब्दः युक्तश्च प्रवत्स्यत्पतिकेति। अपरितोषः ननूक्तास्वेवान्तर्भाव इत्यत आह प्रोषितेत्यादिकाकुः शोकमोहात् ध्वनिविकारः कातरं कृपणं। प्राणेश्वरे निर्गमाय यात्रायै किमपि जल्पति सति क्षामं सूक्ष्ममुदरं यस्या सा वदनमानमयाञ्चकार। आली सखी पुनस्तु निभृतं गुप्तं लज्जानिकुञ्जमेत्यागत्य उन्मत्तो हृष्टो यः कोकिलस्तस्य कलः सान्द्रोध्वनिस्तमाततान। इह नम्रवदनेन लज्जातिशयो वाष्पादिश्च। सख्यास्तथाकरणेन गमनविघ्नोपदर्शनं च व्यज्यते ॥८२॥

**मध्या प्रोष्यत्पतिका यथा–**

**गन्तुं प्रिये वदति निश्श्वसितं न दीर्घ-**
**मासीन्न वा नयनयोर्जलमाविरासीत्**
**आयुर्लिपिं पठितुमेणदृशः परन्तु**
**भालस्थलीं किमु कचः समुपाजगाम ॥८३॥**

गन्तुं प्रिये वदति सति एणदृशः कान्ताया दीर्घं निश्श्वसितं नासीन्नवा नयनयोर्जलमाविः प्रकटमासीत्। परन्तु आयुः पठितुं भालस्थलीं कचो मुक्तोबालः समुपाजगाम किमित्युत्प्रेक्षा। इह निश्श्वासवाष्पा प्राकट्येन लज्जावत्ता मूर्छावशेन चलञ्चल विस्रंसनादिनाकचललाट गमनेन मदनवत्ता वाष्पादिर्विस्फुटः ॥८३॥

**प्रोढा प्रोष्यत्पतिका यथा–**

**नायं मुञ्चति सुभ्रुवामपि तनुत्यागे वियोगज्वर-**
**स्तेनाहं विहिताञ्जलिर्यदुपते! पृच्छामि सत्यं वद।**
**ताम्बूलं कुसुमं पटीरमुदकं यद् बन्धुभिर्दीयते**
**स्यादत्रैव परत्र तत्किमु विषज्वालावलीदुस्सहम् ॥८४॥**

कृष्णं प्रति गोपीवाक्यमुदाहरति। हे यदुपतेऽयमवाच्योवियोगज्वरोविरहसन्तापः सुभ्रुवां तनुत्यागे शरीरत्यागेऽपि न मुञ्चति। तेन बद्धाञ्जलिरहं पृच्छामि त्वं सत्यं वद। यत्ताम्बूलं कुसुमं पटीरं चन्दनमुदकं कीदृशं विषस्य ज्वाला तस्याआवली समुदायस्तद्वद्दुस्सहं वन्धुभिर्दीयते मृतायेति शेषः। तत्किमिति प्रश्नेऽत्र लोके स्याद्वा। तथा त्वद्वियोगे मरणमवश्यं भावीति विज्ञाय यथोचितमाचरेति भावः। इह सुभ्रुवामिति बहुत्वेनस्वावस्थानिवेदनस्याशक्यत्वेन काकुवचनादिः ताम्बूलादेरतिशीतलस्याविषे( ?)त्यादिना निर्वेदसन्तापादिश्च मरणज्ञापनेन गमनविघ्नत्वं सर्वत्र पदे रतिप्रीतिप्राकाश्यं च व्यज्यते ॥८४॥

**परकीया प्रोष्यत्पतिका यथा–**

**न्यस्तं पन्नगमूर्ध्नि पादयुगलं भक्तिर्विमुक्ता गुरो-**
**स्त्यक्ता नीतिरकारि किं न भवतो हेतोर्मया दुष्कृतम्**
**अङ्गानां शतयातना नयनयोः कोऽपि क्रमो रौरवः**
**कुम्भीपाकपराभवश्च मनसो युक्तं त्वयि प्रस्थिते ॥८५॥**

भवतो हेतोस्त्वन्निमित्तं मया दुष्कृतं पापं किन्नाकारि सर्वमपि कृतमित्यर्थः। पन्नगस्य सर्पस्य मूर्ध्नि पादयुगलं न्यस्तं कृतं गुरोः श्वशुरादेर्भक्तिर्विमुक्ता त्यक्ता नीतिः स्वकुलमर्य्यादा त्यक्ता।नअतस्त्वयि प्रस्थिते सति। अङ्गानां शतयातना असंख्यवेदना नयनयोः कोऽप्यनिर्वाच्यो रौरवस्थनरकविशेषस्यायंरौरवः क्रमो विन्यासः मनसश्च कुम्भीपाकेन पराभवः पीडा भविष्यतीतियुक्तं इह न्यस्तमित्यादिनाकातरादिः ॥८५॥

**सामान्यवनिता प्रोष्यत्पतिका यथा–**

**मुद्रां प्रदेहि वलयाय भवद्वियोग-**
**मासाद्य यास्यति बहिः सहसा यदेतत्।**
**इत्थं निगद्यविगलन्नयनाम्बुधारा**

**वाराङ्गना प्रियतमंकरयोर्बभार ॥८६॥**

मुद्रां वलयाय प्रदेहि। यदेतद्वलयं भवद्वियोगमासाद्य सहसा कस्माद्बहिर्यास्यति। इत्थं निगद्य विगलन्नयनाम्बुधारा वाराङ्गना करयोः प्रियतमं बभार दध्रे। इह समुद्रोद्देशेनैव प्रियतमधरणेन धूमिललालसावत्त्वं व्यङ्ग्यम् ॥८६॥

**अहितकारिण्यपि प्रिये हितकारिण्युत्तमा।**

**अस्या उत्तमैव सफला चेष्टा।**

**तद्यथा–**

**पतिश्शयनमागतः कुचविचित्रितोरःस्थलः**

**प्रसन्नवचनामृतैरयमतर्पि वामभ्रुवा।**

**अचर्चि सुभगस्मितद्युतिपटीरपङ्कद्रवै-**

**रपूजि विलसद्विलोचनचमत्कृतैरम्बुजैः ॥८७॥**

सर्वनायिका साधारणभेदमाह। उत्तमेति। स्वोक्तित्रयमुदाहरतिकुचाभ्याम् अन्यनायिका इति शेषः विचित्रितमुरो वक्षः स्थलं यस्य तादृशोऽपि पतिः शयनं पर्य्यंकमागतः। तत्क्षणे एव प्रसन्नानि मञ्जुलादियुक्तवचनानि तद्रूपैरमृतैरतर्पि प्रसादितः पुनः सुभगा रमणीया स्मितद्युतिः सा एव पटीरस्य चन्दनस्य पङ्क द्रवरूपाणि द्रव्याणि तैरचर्चि अपूजि। पुनः विलसद्विशिष्ट लोचनयोश्चमत्कृतैस्तद्रूपैरम्बुजैः कमलैरपूजि। इहापराध बाधितेऽपि तत्तकरणेनोत्तमात्वममृतत्वेन प्राणप्रदत्वं विलासत्वेन हर्षवत्वं तेन कोपोदया भावः। अतर्पीतित्रयेण भक्तातिशयश्च व्यज्यते ॥८७॥

**हिताहितकारिणी प्रियतमे हिताहितचेष्टावती मध्या अस्यास्तु व्यवहारानुसारिणी चेष्टा तद्यथा–**

**कान्ते सागसि कञ्चुकस्पृशि तया वक्रीकृतग्रीवया**

**मुक्ताः कोपकषायमन्मथशरक्रूराः कटाक्षांकुराः।**

**साकूते दरहासकेसरवचो माध्वीकधारालसा**

**प्रीतिः कल्पलतेव काचनमहादानीकृता सुभ्रुवा ॥८८॥**

कान्ते मनोहरेऽपि सागसि पराङ्गनासङ्गमरूपकृतापराधे सति पुनः कञ्चुकं स्पृशतीति तथाभूते वक्रीकृतग्रीवया कोपेन कषायाः अतो मन्मथशरवक्रूराः कटाक्षा एवाशुगाः वाणा मुक्ताः साकूतसाभिप्राये चाटुवचनरचनाकारिणि दरइषद्धासएव

प्रसादजन्मा केसरं यत्र तादृशवचोरूपः माध्वीकस्यामृतस्य धारा तया निर्भरा प्रीतिर्मनोरथसंपत्तिः। काचनावाच्याकल्पलतेव महादानीकृता इह व्यवहारानुसारिणी चेष्टा स्फुटैव ॥८८॥

**हितकारिण्यपि प्रियतमेऽहितकारिण्यधमा एषैव निर्निमित्तकोपना चण्डीत्यभिधीयते अस्या निष्कारणकोपत्वादधमैव चेष्टा तद्यथा–**

**प्रस्थाने तव यः करोति कमलच्छायां मुखाम्भोरुहे**
**श्रीखण्डद्रवधारया शिशिरया मार्गं पुरः सिञ्चति।**
**तस्मिन् प्रेयसि विद्रुमद्रवनदीरिङ्गत्तरङ्गभ्रमि-**
**भ्रान्तक्लान्तसरोजपत्रसदृशा भूयो दृशा क्रुध्यसि ॥८९॥**

सखीवाक्यमाह। हे सखि! प्रस्थाने तव मुखाम्भोरुहे कमलच्छायां करोति। श्रीखण्डचन्दनं स्फुटमग्रे तस्मिन्प्रेयसि प्रीतिपात्रेऽपि दृशा भूयो वारं वारं क्रुध्यसि ईदृशे पत्यौ सकृदपि न विमनस्कता युक्ता किं पुनः क्रोधोऽनया तु महाक्रोधः कृतोऽतोधर्म्मैवेति भावः। क्रोधं विशेषणेनाह विद्रुमाणां द्रवनदी तस्यां ये रिङ्गन्तः शोभाशालिनस्तरंगास्तेषां या भ्रमिरावर्त्तस्तत्र भ्रान्तम् अतः क्लान्तं मानं यत्सरोज पत्रं तत्सदृशा एवं महाक्रोधः ॥८९॥

**विस्तरभिया प्रत्येकमेतासामुत्तममध्यमाधमभेदा नोदाहृता इति।**

**विश्वासविश्रामकारिणी पार्श्वसहचारिणी सखी अस्या मण्डनो-पालम्भ-शिक्षा-परिहासप्रभृतीनि कर्माणि**

**मण्डनं यथा–**

**स्तनकनकमहीधरोपकण्ठे**
**प्रियकरपल्लवमुल्लसत्प्रमोदम्।**
**रहसि मकरिकामिषाल्लिखन्तीं**
**कमलमुखी कमलैः सखीं जघान ॥९०॥**

प्रसङ्गात्सख्यादीन्निरूपयति-विश्वासेति मण्डनं भूषणं उपालम्भः सनिन्दवचनं स्वोक्तिमाह। स्तनौ कनकस्य महीधरौ पर्वतौ तयोरुपकण्ठे समीपदेशे उल्लसत्प्रमोदं कुचस्पर्शेन सरोमाञ्चं प्रियकरपल्लवं मकरिकापत्रावलीमिषाद्व्याजाद्रहस्येकान्ते लिखन्तीं सखीं कमलमुखी कमलैर्जघान। इह कनकत्वेन गौरत्वं महीधरत्वेनोतुङ्गत्वं काठिन्यं च प्रियत्वेन लेखनौचिती च ध्वन्यते विश्रामादि च व्यक्तम् ॥९०॥

उपालम्भो यथा–

सान्द्रध्वानैर्मुखरितदिशश्श्रेणयस्तोयदानां
धारासारैर्धरणिवलयं सर्वतः प्लावयन्ति।
तेन स्नेहं वहति विपुलं मत्सखी युक्तमेव
त्वं निःस्नेहो यदसि तदिदं नाथ! मे विस्मयाय ॥९१॥

कृष्णं प्रति सखीवाक्यमाह–हे नाथ! तेन हेतुना मत्सखी त्वयि विपुलं बहु स्नेहं प्रेम वहति एतद्युक्तमेव त्वं निःस्नेहो यदसि तदिदं मे विस्मयाय कान्तायैवं कृतं तव तु समर्यादमेवेदं कर्त्तव्यमित्युपालम्भः। हेतुमाह–तोयदानां श्रेणयः सान्द्रध्वानैर्मुखरितदिशो धारासारैर्धरणिवलयं मण्डलं सर्वतः प्लावयन्ति। ईदृशमेघदर्शनादिना मदनोद्दीपनेनानुरागो युक्त इत्यर्थः ॥९१॥

शिक्षा यथा–

सानन्दमालि! वनमालिविलोकनाय
निर्गच्छ कुञ्जमिति किन्तु विचारयेथाः।
झङ्कारिणो मधुलिहो दिवसे भ्रमन्ति
रात्रौ पुनश्चपलचञ्चुपुटाश्चकोराः ॥९२॥

हे आलि! सानन्दं वनमालि विलोकनाय कुञ्जं निर्गच्छ किन्तु इति वक्ष्यमाणं विचारयेथाः तदाह दिवा झङ्कारिणः शब्दकरा मधुलिहो भ्रमन्ति त्वदङ्गसौरभ लोलुभा आगमिष्यन्तीति। दिवाभिसारो न युक्तः। रात्रावपि चपलचञ्चुपुटाश्चकोराः विहसित मुख सचन्द्रिकचन्द्रभ्रान्त्या तेऽप्यागच्छेयुरित्यन्यो बुध्येदत्रापि नाभिसारः तस्मात्तथागन्तव्यं यथाऽन्यो न जानीयादिति शिक्षा। केचित्तु मधुलिह चकोरशब्दाभ्यां गानाधरपानलोलुपतरुणप्रतीत्या तद्रूपबाधकत्वमित्याहुः ॥९२॥

परिहासो यथा–

आगारभित्तिलिखितासु निवेदयस्व
कः सप्तमो दशसु मूर्तिषु लोकभर्तुः।
इत्थं सखीजनवचः प्रतिपद्य सद्यः
सीता स्मितद्युतिभिरुत्तरयाञ्चकार ॥९३॥

आगारेति। सुबोधम्। स्वीयपुरुषनागग्रहदोषाल्लज्जातिशयाच्च परिहासः॥९३॥

सख्याः परिहासवत् प्रियस्यापि परिहासः।

यथा–

भ्रूसञ्ज्ञयादिशसि तन्वि! सखीं न वाग्भि-
रित्थं विहस्य मुरवैरिणि भाषमाणे।
राधा चिराय दशनव्रणदूयमान-
बिम्बाधरा वदनमानमयाञ्चकार ॥९४॥

हे तन्वि! सखीं भ्रूसंज्ञया दिशसि आज्ञापयसि वाग्भिर्न इत्थं विहस्य हासं कृत्वा मुरवैरिणि कृष्णे भाषमाणे सति दशनानां दन्तानां व्रणं क्षतं तेन दूयमानः खिन्नो बिम्बफलविशेषस्तद्वदधरो यस्यासौ राधा वदनं चिराय बहुकालमानमयाञ्चकार। इह वागभावपूर्वकभ्रूसंज्ञा ज्ञापनेनाधरदशन दंशज्ञापनमावेद्यते।. वदननम्रत्वेन लज्जातिशयस्तेन मुग्धात्वं तच्च परकीयाया अस्त्येव प्रियहासश्च स्फुटतरः ॥९४॥

प्रियस्य परिहासवत् प्रियाया अपि परिहासः

यथा–

दिव्यं वारि कथं, यतः सुरधुनी मौलौ, कथं पावको
दिव्यं तद्धि विलोचनं, कथमहिर्दिव्यं स चाङ्गे तव।
तस्माद् द्यूतविधौ त्वयाऽद्य मुषितो हारः परित्यज्यता-
मित्थं शैलभुवा विहस्य लपितः शम्भुः शिवायास्तु नः ॥९५॥

शैलभुवा पार्वत्या इत्थं विहस्य लपितः कथितः शम्भुर्नश्शिवाय श्रेयसेऽस्तु कथं? तदाह। वारिजलं दिव्यं परीक्षा कथं यतः ते मौलौ सुरधुनी गङ्गैव तथा पावको दिव्यं तत्तृतीयं विलोचनम्। अहिः सर्पोऽपि कथं दिव्यं यतस्स च तवाङ्गे, तस्मादद्य द्यूतविधौ मुषितश्चोरितः हारः परित्यज्यताम् इह स्फुटः परिहासः ॥९५॥

दूत्यव्यापारपारङ्गमा दूती।

तस्याः संघटन-विरहनिवेदनादीनि कर्माणि संघटनं

यथा–

अञ्चति रजनिरुदञ्चति तिमिरमिति चञ्चति मनोभूः।
उक्तं न त्यज युक्तं विरचय रक्तं मनस्तस्मिन् ॥९६॥

संघटनं सम्मेलनं कामिनोरित्यर्थः तदुदाहरति। रजनी रात्रिरुदञ्चति समायाति। तिमिरमुदञ्चति प्रकटेन वर्तते तैर्गमने योग्यता अगमने बाधकमाह। मनोभूश्चञ्चति हृष्यति। विजयसाधनसिद्ध्येति भावः। एवंचागमने कामपीडा स्यादिति आवश्यकता। किंचोक्तं गमनं प्रति प्रतिज्ञातं न त्यज तस्मिन्कान्ते मनोरक्तमासक्तं रचयेति युक्तम्। इहैवं कथने प्रिय प्रेषितत्वं दूत्याः संघटनं प्रकटम् ॥९६॥

विरहनिवेदनं यथा–

**चक्रे चन्द्रमुखी प्रदीपकलिका धात्रा धरामण्डले**
**तस्या दैववशाद्दशाऽपि चरमा प्रायः समुन्मीलति।**
**तद् ब्रूमः शिरसा नतेन सहसा श्रीकृष्ण! निक्षिप्यतां**
**स्नेहस्तत्र तथा यथा न भवति त्रैलोक्यमन्धंतमः ॥९७॥**

काचिद्दूती कृष्णं प्रति वाक्यमाहेत्याह–हे कृष्ण! सा चन्द्रमुखी धात्रा धरामण्डले प्रदीपकलिकाचक्रे निर्ममे तस्याश्च दैववशाच्चरमान्तिमापि दृशा समुन्मीलति आयाति। तद्धेतोर्ब्रूमो नतेन शिरसा तत्र तस्यां तथा सहसा तत्कालमेव स्नेहः प्रेम निःक्षिप्यतां यथा–त्रैलोक्यमन्धन्तमो न स्यात् एवं च त्रिभुवनाभिरामा सा त्वत्प्रसादं विना न जीविष्यतीति दीपकलिकापि निर्वाणं यातीति तैलेन जीवयति। इह मरणनिवेदनेन विरहनिवेदनम् ॥९७॥

**शृङ्गारस्योभयनिरूप्यत्वान्नायकोऽपि निरूप्यते पतिरुपपतिर्वैशिकश्च।**
**तत्र विधिवत्पाणिग्राहकः पतिः।**
**यथा–**

**त्वं पीयूषमयूख! मुञ्च शिशिरस्निग्धान् सुधाशीकरान्।**
**त्वं भोगीन्द्र! विलम्बसे किमु फणाभागैः शनैर्बीजय।**
**त्वं स्वर्वाहिनि! किञ्च सिञ्च सलिलैरङ्गैः शिरीषोपमैः**
**सेयं शैलसुता कठोरमहसः कान्त्या पथि क्लाम्यति ॥९८॥**

एवं क्रमात् नायिकां निरूप्य ततो नायके निरूपणीये युक्तिमाह–शृङ्गारस्येति। नयति पश्चाद्वल्लभां रतिहर्षमिति निर्वचनेनेति भावः। यतस्सेयं शैलसुता पार्वती कठोरमहसः सूर्य्यस्य कान्त्या दीप्त्या पथि मार्गे यत्क्लाम्यति दुःखी भवति। अतो हे पीयूषमयूख! सुधाकर चन्द्रशिशिराश्शीलता स्निग्धाः सान्द्रास्सुधायास्सीकराः कणिकास्तान् त्वं मुञ्च वर्ष! हे भोगीन्द्र शेषफणाभोगैः शनैर्मन्दं वीजय वातं

कुरु। किमु विलम्बसे। तथा हे स्वर्वाहिनि स्वर्गङ्गे! बहुना सलिलैः सिञ्च इह चन्द्रादेः स्वाधीनत्वेऽपि पुनस्तत्प्रार्थनया वैह्वल्यं तेन प्रेमातिशयो व्यज्यते ॥९८॥

**अनुकूलदक्षिणघृष्टशठभेदात् पतिश्चतुर्द्धा। सार्वकालिक पराङ्मुखत्वे सति सर्वकालमनुरक्तोऽनुकूलः। यथा–**

**सार्वकालिकेति दक्षिणेति व्याप्तिवारकं सत्यन्तम्।**

**पृथ्वि! त्वं भव कोमला दिनमणे! त्वं शैत्यमङ्गीकुरु**
**त्वं वर्त्मन्! लघुतां प्रयाहि पवन! त्वं खेदमुत्सारय।**
**सान्निध्यं श्रय दण्डकानन! गिरे! निर्गच्छ मार्गाद्बहिः**
**सीताऽसौ विपिनं मया सह यतो निर्गन्तुमुत्कण्ठते ॥९९॥**

पृथिव्यादिं प्रति रामवाक्येन तमुदाहरति हे पृथ्वि इत्यादि। सुगमम्। हे दण्डनामक कानन वन सानिध्यं सामीप्यं श्रय। हे गिरे मार्गाद्बहिर्निगच्छ। त्वल्लंघने क्लेशो भवेत्। यतोऽसौ सुकुमारतरा सीता मया सह विपिनं निर्गन्तुमुत्कण्ठते। इह सीतायाः पृथ्वीभवतयाऽकृत्रिमप्रेमपात्रत्वेऽपि पुनस्तत्प्रार्थनया स्वस्य सूर्य्यवंशवंश्यत्वेन सूर्य्यप्रार्थनया च वनादेरचेतनस्य तत्तन्निवेदनेन विह्वलतया चातिशयितानुरागो व्यज्यते। अन्यनायिकाननुरागश्च ॥९९॥

**सकलनायिकाविषयसमसहजानुरागो दक्षिणो यथा–**

**एतत्पुरः स्फुरति पद्मदृशां सहस्र–**
**मक्षिद्वयं कथय कुत्र निवेशयामि।**
**इत्याकलय्य नयनाम्बुरुहे निमील्य**
**रोमाञ्चितेन वपुषा स्थितमच्युतेन ॥१००॥**

सकलेति। समोऽन्यूनानधिकः सहजोऽकृत्रिमः कार्यानुरूपनायिकानुरागवच्चतुरवारकं समेति। कृत्रिमानुरागशठनिरासकं सहजेति।

एतां किं न विलोकयतीतिवादिनं केचित् प्रतिकृष्णवाक्येन तमुदाहरति। हे मित्र! पद्मदृशामेतत्सहस्रं पुरोऽग्रे स्फुरति विचित्रं विकसति। अतः कुत्र कस्यामक्षिद्वयं निवेशयामि त्वं कथय। इत्येवमाकलय्य उक्त्वा नयनाम्बुरुहे निमील्य रोमाञ्चितेन पुलकितेन वपुषाऽच्युतेन कृष्णेन स्थितम्। इह नेत्रनिमीलनेन सर्वत्र स्नेहतुल्यता व्यज्यते। चक्षुषा द्वित्र्यादिदर्शनमेव मनसा तु सर्वदर्शनमिति भावः ॥१००॥

भूयो निश्शङ्ककृतदोषोऽपि भूयो निवारितोऽपि भूयः प्रश्रयपरायणो धृष्टः। यथा–

बद्धो हारैः करमलयोर्द्वारतो वारितोऽपि
स्वापं ज्ञात्वा पुनरुपगतो दूरतो दत्तदृष्टिः।
तल्पोपान्ते कनकवलयं मुक्तमन्वेषयन्त्या
दृष्टो धृष्टः पुनरपि मया पार्श्व एव प्रसुप्तः ॥१०१॥

हे सखि! हारैः कमलस्रग्भिः बद्धः द्वारतो वारितोऽपि दूरतो दत्तदृष्टिः सन् स्वापं ज्ञात्वा पुनरुपगतः, प्राप्तः तल्पोपान्ते मुक्तं कनकवलयमन्वेषयन्त्या मार्गयन्त्या मया पार्श्वे एव प्रसुप्तो धृष्टो दृष्टः। इह बन्धनेन कृतदोषता। वारितत्वम् स्फुटम्। दूरत इत्यनेन स्वापेन च प्रश्रयो द्योत्यः ॥१०१॥

कामिनीविषयककपटपटुश्शठः यथा–

मौलौ दाम विधाय भालफलके व्यालिख्य पत्रावलीं
केयूरं भुजयोर्निधाय कुचयोर्विन्यस्य मुक्तास्रजम्
विश्वासं समुपार्जयन् मृगदृशः काञ्चीनिवेशच्छला-
न्नीवीबन्धमपाकरोति मृदुना हस्तेन वामभ्रुवः ॥१०२॥

कामनीति। सापराधत्वे सति बन्धनरचनानिपुणत्वमित्यर्थः।

मौलौ दाममालां सुबोधम्। इत्थं मृगयतीति मृगा सा दृक् यस्यास्तस्यास्तेन सर्वक्रियायां चकितत्वं शठस्तु विश्वासं समुपार्जयन् बर्द्धयन् काञ्च्यानिवेशं परिधापनं तद्व्याजान्मृदुनाशनैर्हस्तेनातोवामभ्रुवोवक्रभ्रुवस्तेन वञ्चनाऽयोग्यत्वं नीवीबन्धमपाकरोति विमोचयति। इह मृगेत्यादिना नायकापराधो द्योत्यः तत्तद्भूषा विधातेन वञ्चनां जानन्त्या अपि विश्वासार्जनेन मृदुनेत्यनेन च निपुणत्वं व्यङ्ग्यम् ॥१०२॥

आचारहानिहेतुरुपपतिः यथा–

शङ्का शृङ्खलितेन यत्र नयनप्रान्तेन न प्रेक्ष्यते
केयूरध्वनिभूरिभीतिचकितं नो यत्र वाऽऽश्लिष्यते।
नो वा यत्र शनैरलग्नदशनं विम्बाधरः पीयते
नो वा यत्र विधीयते च भणितं तत्किं रतं कामिनोः ॥१०३॥

कान्तवाक्यद्वयेन तमुदाहरति यत्र यस्मिन् रतिशङ्कया शृङ्खलितेन प्रतिबद्धेन

नयनप्रान्तेन न प्रेक्ष्यते यत्र वा केयूरयोर्ध्वनिना भूरि बहुभीतिस्तया चकितं नो आश्लिष्यते आलिङ्ग्यते यत्र वा न लग्नं दशनं दन्तजव्रणं यस्मिन्तद्यथा तथा दशनैर्मन्दं बिम्बाधरो नो पीयते यत्र वा भणितं रतिकूजितं नो विधीयते। स्त्रीपुंसाभ्यामितिशेषः कामिनोः स्त्रीपुंसयोस्तत् रतं किं न किमपीत्यर्थः। प्रच्छन्नकामित्वात्सर्वमेतद्भवतीति भावः। इह भयादिना आचारविनाशकत्वं प्रकटम्। अत्रैतादृशप्रतिसन्धानसत्त्वाद् विगलितवेद्यान्तरत्वाभावात्कथं रसपोष इति विभावनीयम् ॥१०३॥

**उपपतिरपि चतुर्धा–**

**परन्तु शठत्वं तत्र नियतमनियताः परे।**

**बहलवेशोपभोगरसिको वैशिकः।**

**यथा–**

**काञ्चीकलत्क्वणितकोमलनाभिकान्ति**

**पारावतध्वनिविचित्रितकण्ठपालिम्।**

**उद्भ्रान्तलोचनचकोरमनङ्गरङ्ग-**

**माशास्महे कमपि वारविलासवत्याः ॥१०४॥**

चतुर्द्धेति। अनुकूलादि भेदेन। ननु सार्वकालिकपराङ्गनापराङ्मुखत्व घटितस्यानुकूलत्वस्योपपतौ कथं सम्भव इति चेत्। इत्थम् पराङ्गनापदेन तदितरकामिनीमात्राभिधानात्। शठत्वव्याप्यमेवात्रानुकूलत्वमित्याहुः। बहलश्चासौ वेश्योपभोगश्च वारविलासवत्याः कमप्यन्यनायिकातो विलक्षणमनङ्गरङ्गं सुरतं आशास्महे। प्रार्थयामः उपभुक्तमपीत्यर्थः। तेनोपभुक्त प्रार्थनया भोगबाहुल्यं कमपीत्यनेन स्वस्यैव ज्ञानयोग्यत्वेन रसिकत्वं स्फुटमग्रे ॥१०४॥

**वैशिकस्तूत्तममध्यमाधमभेदात् त्रिविधः–**

**दयिताया भूयः प्रकोपेऽप्युपचारपरायण उत्तमः**

**यथा–**

**चक्षुः प्रान्तमुदीक्ष्य पक्ष्मलदृशः शोणारविन्दश्रियं**

**नोच्चैर्जल्पति न स्मितं वितनुते, गृह्णाति वीटीं न च।**

**तल्पोपान्तमुपेत्य किन्तु पुलकभ्राजत्कपोलद्युतिः**

**कान्तः केवलमानतेन शिरसा मुक्तास्रजं गुम्फति ॥१०५॥**

पक्ष्मलदृशश्चक्षुः प्रान्तं शोणारविन्दश्रियमुद्दीक्ष्य नोच्चैर्जल्पतीत्येवमग्रेऽपि किन्तु तल्पोपान्तमुपेत्य पुलकेन भ्राजन्ती कपोलयोर्द्युतिर्यस्य सः कान्तः केवलमेकान्तमानतेन शिरसा मुक्तास्रजं तदर्थं गुम्फति इह शोणेन प्रान्तेन च कोपाभीक्ष्ण्यम् जल्पनाद्यभावेन भयभूतरोमोद्गमेन नम्रशिरः स्रग्गुम्फनेनकोपाङ्गरागाभावाद्युपचारतत्परत्वमावेद्यत्ते ॥१०५॥

प्रियायाः प्रकोपे यः कोपमनुरागं वा न प्रकटयति स मध्यमः यथा–

आस्यं यद्यपि हास्यवर्जितमिदं लास्येन वीतं वचो
नेत्रं शोणसरोजकान्ति तदपि क्वापि क्षणं स्थीयताम्।
मालायाः कमलोद्यमो मकरिकारम्भः कुचाम्भोजयो-
र्धूमः कुन्तलधोरणीषु सुदृशः सायन्तनो दृश्यते ॥१०६॥

कुपितकान्तामालोक्य सम्प्रति स्ववाक्येनाधममुदाहरति। यद्यपि सुदृश आस्यं मुखं हास्यवर्जितं, वचोलास्येन सगाननृत्येन वीतं रहितं, नेत्रं चक्षुः शोणमरुणं सरोजमब्जंतस्येवकान्तिर्द्युतिर्यस्य तादृशं, क्रोधावेशादिति भावः। तदपि तथापि क्वापि कुत्रचिन्नयनागोचरे स्थले क्षणं भवतास्थीयतां मा त्वं त्वरिष्ठाः कुतस्तत्राह। सुदृशः सायं भवः सायंतनो मालायाः कमलाय उद्यम उत्साहः कुचाम्भोजयोर्मकरिकारम्भः पत्ररचनारम्भः कुन्तलः केशपाशस्तद्धोरणीषु सन्धानेषु धूमः सुरभिद्रव्यजन्यश्च दृश्यतेऽतःसुरतसामग्री-सम्पादनमग्रे विलक्षणक्षेमप्रक्षम इति शेषार्थः। इह क्षणस्थानेन कोपाद्यभावः उद्यमादिदर्शनेन भावग्राहकत्वं च व्यज्यते॥१०६॥

भयकृपालज्जाशून्यः कामक्रीडाप्राप्तकृत्याकृत्यविचारोऽधमः।
यथा–

उदयति हृदि यस्य नैव लज्जा
न च करुणा, न च कोऽपि भीतिलेशः।
बकुलमुकुलकान्तिकोमलां मां
पुनरपि तस्य करे न पातयेथाः ॥१०७॥

दूतीं प्रति सखीवाक्येन तमुदाहरति। हे दूति! तस्य वल्लभाभासस्य करे वकुलमुकुलकान्तिरिव कोमलां ईदृशीं मां न पातयेथा ग्राहयेथाः। पूर्वार्द्धं स्फुटं कोऽपीत्यस्य लिंगविपरिणामेन लज्जादावप्यन्वयः। इह वकुलेत्यादिनेदृक्कोमलाया नायकं विना न रतिस्वारस्यमयन्तुकामकलायामकुशल इति भयादिशून्यत्वं च स्फुटतरम् ॥१०७॥

मानी चतुरश्च शठ एवान्तर्भवति।

मानी यथा–

बाह्याकूतपरायणं तव वचो वज्रोपमेयं मनः
श्रुत्वा वाचमिमामपास्य विनयं व्याजाद् बहिः प्रस्थिते।
प्रातर्वीतविलोकने परिहृतालापे विलक्षानने
प्राणेशे निपतन्ति हन्त कृपणा वामभ्रुवो दृष्टयः ॥१०८॥

एवेत्ययं भवत्यनन्तरं योज्यः। भवत्येव न स्वतन्त्र इत्यर्थः। शठपदमनुकूलातिरिक्तपरमित्यपि केचित् एतेन दक्षिणस्यापि मानित्वादिसम्भावनेन शठएवेतिचिन्त्यमित्यपास्तम्। सखी राधिकां प्रत्याह। वाह्याकूत आशयस्तत्परायणं तव वचो न तु आभ्यन्तराशयप्रधानं तथा मनोऽपि वज्रोपमेयं वज्रसदृशं अहमधुनैवागमिष्यामीति वचो मनश्च तव विरहिणेदृशींदशां भजामि तामिति प्रियां प्रतारयसीति यत इति भावः। इमामस्या वाचं श्रुत्वा विनयं नायिकाविषयकसांत्वनमपास्य परित्यज्य त्यजति (बहिः) गृहादित्वादिः (गृहाद् बहिः) प्रस्थिते तथा परिहृतालापे त्यक्तवचने न पुनरेवमेवापितु वीतविलोकने 'अतद्दृष्टिव्यापन्ने' न केवलमेवमेवापि तु विवृत्तानने वक्रितमुखे ईदृशे प्राणेशे हन्तानुकंपायां वामभ्रुवो वक्रभ्रुवो दृष्टयः कृपणाः कातरतरा निपतन्ति इह प्रस्थानादिना मानित्वम् ॥१०८॥

वाक्चेष्टाव्यङ्ग्यसमागमश्चतुरः

वचनव्यङ्ग्य समागमो यथा–

तमोजटाले हरिदन्तराले काले निशायास्तव निर्गतायाः।
तटे नदीनां निकटे वनानां घटेत शातोदरि! कः सहायः ॥१०९॥

नायिकां प्रति कान्तवाक्येन तमुदाहरति–हे शातोदरि! निशायाः काले रात्रौ हरितां दिशामन्तराले मध्यदेशे तमोभिः जटाले व्याप्ते सति निर्गतायास्तव नदीनां तटे वनानां निकटे समीपे सहायो द्वितीयः को घटेत किन्त्वहमेव इति वचनेन व्यङ्ग्यसमागमः ॥१०९॥

चेष्टाव्यङ्ग्यसमागमो यथा–

कान्ते कनकजम्बीरं करे किमपि कुर्वति।
आगारलिखिते भानौ विन्दुमिन्दुमुखी ददौ ॥११०॥

स्वोक्तिमाह। कान्ते कनकजम्बीरं किमपि करे कुर्वति सति इन्दुमुखी आगारलिखिते भानौ सूर्ये विन्दुं ददौ इह जम्बीरकरग्रहणेन कदागत्य रतिलाभ इति प्रार्थनायां सूर्यविन्दुदानेन तदस्ते इन्दुत्वेन विधूदये वासमागत्य तल्लाभ इति चेष्टया व्यङ्ग्यसमागमः ॥११०॥

**प्रोषितः पतिरुपपतिर्वैशिकश्च भवति**

**क्रमेणोदाहरणानि–**

**ऊरु रम्भादृगपि कमलं शैवलं केशपाशो**
**वक्त्रं चन्द्रो, लपितममृतं, मध्यदेशो मृणालम्**
**नाभिः कूपो वलिरपिसरित्, पल्लवः किञ्चपाणि-**
**र्यस्याः सा चेदुरसि, न कथं हन्त तापस्य शान्तिः ॥१११॥**

सा चेदुरसि हन्त तापस्य शान्तिः। कथं सा का यस्या ऊरु रम्भा कदली अतिशीतलतरत्वादिति भावः। एवमग्रेऽपि। इहामृतत्वादिना दौर्लभ्यं तेन कुलवधूत्वम्। उरसीत्यादिनैकान्तिकप्रीतिमत्वात्पतित्वं हन्तेति स्मृत्या प्रोषितत्वं च व्यज्यते ॥१११॥

**यान्त्याः सरः सलिलकेलिकुतूहलाय**
**व्याजादुपेत्य मयि वर्त्मनि वर्तमाने**
**अन्तः स्मितद्युति चमत्कृतदृक्तरङ्गै-**
**रङ्गीकृतं किमपि वामदृशः स्मरामि ॥११२॥**

सरस्सलिलकेलिकुतूहलाय यान्त्या वामदृशः सुन्दरदृशोऽन्तः स्मितद्युति यद्यथास्यात्तथा चमत्कृतं मनोहराभिर्दृक्तरङ्गैर्नेत्रविभ्रमैरङ्गीकृतं किमप्यवाच्यं स्मरामि। इह गुप्तहासेन किञ्चित्प्रश्नाद्यभावपूर्वकमार्गस्थित्या च व्याजेन चोपपतित्वं स्मृत्या प्रोषितत्त्वञ्च ॥११२॥

**अधृतपरिपतन्निचोलबन्धं मुषितनकारमवक्रदृष्टिपातम्।**
**प्रकटहसितसुन्दरास्यविम्बं पुरसुदृशः स्मरचेष्टितं स्मरामि ॥११३॥**

कान्तवाक्येन तमुदाहरन्ति पुरसुदृशो वेश्यायाः स्मरचेष्टितं कामजन्यभावं स्मराम्यहं कीदृशं अधृतेनाग्रहणेनैव परिपतन्स्खलन् निचोलबन्धो यत्र तत्। अवक्रं ऋजुर्दृष्टिपाते यत्र तथा प्रकटहसितेन सुन्दरम् आस्यविम्बं यत्र तादृशम्। इहाघृतादिविशेषणत्रयेण धनलोलुभ स्वदाप्रासाद (सदाप्रसाद) लज्जाभावातिशयास्तेन

वैशिकत्वं स्मृत्या प्रोषितत्वम् ॥११३॥

अनभिज्ञो नायको नायकाभास एव यथा–

शून्ये सद्मनि योजिता बहुविधा भङ्गिर्वने निर्जने
पुष्पव्याजमुपेत्य निर्गतमहो स्फारीकृता दृष्टयः।
ताम्बूलाहरणच्छलेन विहितौ व्यक्तौ च वक्षोरुहा
वेतेनापि न वेत्ति दूति! कियता यत्नेन स ज्ञास्यति ॥११४॥

शून्ये सद्मनि बहुविधा अनेकप्रकाराभङ्गिर्वाक् कटाक्षादियोजिता-उद्दीपनातिशयायेतिभावः। अथ निर्जनेऽपि वने पुष्पव्याजमुपेत्य निर्गतदृष्टयः स्फारीकृताः प्रसारिताः ताम्बूलाहरणच्छलेन वक्षोरुहौ व्यक्तौ प्रकटौ विहितौ कृतौ अहो आश्चर्यमेतत् एतेनापि यत्नेन स मूढोज्ञास्यति कियता यत्नेन ज्ञास्यति। इहोद्दीपनादिकराचारादिनाप्यज्ञतया नायमुपभोगकार्य्यक्षम इति नायकाभासत्वम्।॥११४॥

न च नायिकाया इव नायकस्यैते भेदाः सन्त्विति वाच्यम्।

तस्या अवस्थाभेदेन भेदात् तस्य च स्वभावभेदेन भेद इति विशेषात्।

अनुकूलत्वं दक्षिणत्वं धृष्टत्वं शठत्वमिति

चत्वार एव नायकस्य स्वभाव (वा) इति।

अन्यच्चावस्थाभेदेन यदि नायकस्य भेदः स्यात्, तदोक्त–विप्रलब्ध-खण्डितादयो नायकाः स्वीकर्त्तव्याः। तथा च सङ्केतव्यवस्थायां स्त्रीणामनागमने वा, सम्प्रदायात् अन्यसमागमशङ्का धूर्तत्वं वाऽन्यसम्भोगचिह्नितत्वं च नायकानाम्।

ताः प्रति तदुद्भवने तु रसाभासापत्तेरिति।

तेषां नर्मसचिवः पीठमर्द-विट-चेटक-विदूषकभेदात् पञ्चधा।

कुपितस्त्रीप्रसादकः पीठको (पीठमर्दो) यथा–

कोऽयं कोपविधिः? प्रयच्छ करुणागर्भंवचो जायतां
पीयूषद्रवदीर्घिकापरिमलैरामोदिनीमेदिनी
आस्तां वा स्पृहयालुलोचनमिदं व्यावर्तयन्ती मुहु-
र्यस्मै कुप्यसि तस्य सुन्दरि! तपोवृन्दानि वन्दामाहे ॥११५॥

नर्मणि क्रीडायां सचिवः सहाय इत्यर्थः। नायिकां प्रति तद्वाक्येनाह–हे सुन्दरि! कोऽयं कोपविधिः नायकमुद्दिश्य तथैवेत्यर्थः। करुणा गर्भे यस्य तादृशं वचो देहि। येन पीयूष द्रव्या (वा) नां दीर्घिका गृहवापी जायतां तत्परिमलैर्गन्धैर्मेदिनी

भूमिरामोदिनी गन्धसन्धिर्जायतां एवं त्वयि प्रसन्नायामनेके प्रसन्ना भवेयुः। किं पुनः कान्तस्येत्यर्थः आस्तां वा कोपः स्पृहयालुनायकदर्शनोत्सुक इदं प्रत्यक्षं दृश्यमान चिह्नं नेत्रं व्यावर्त्तयन्ती यस्मै कुप्यसि तस्य तपोवृन्दानि वयं वन्दामहे। तव कोपोऽपि महापुण्यशालिनि कस्मिंश्चिदेवस्वीयत्वेन गृहीत इति सोऽप्यस्मादृशामनुकूलतावदेक एव इह कोपेत्यादिना स्त्रीप्रसादकत्वम् इह कुपियोगेन चतुर्थी नह्यकुपितः क्रुध्यतीति भाष्यादित्याहुर्भट्टाः यम्प्रतिकोप इति सामान्य कथनेन तादृशभाष्ये कुपेरपेक्षया क्रोध बाहुल्यद्योतनार्थं तथोक्तेर्भवत्येवेति तु प्रतिभाति ।।११५।।

**कामतन्त्रकलाकोविदो विटः यथा–**

**आयातः कुमुदेश्वरो, विजयते सर्वेश्वरो मारुतो**
**भृङ्गः स्फूर्जति भैरवो न निकटं प्राणेश्वरो मुञ्चति**
**एवे सिद्धरसाः प्रसूनविशिखो वैद्योऽनवद्योत्सवो**
**मानव्याधिरसौ कृशोदरि! कथं त्वच्चेतसि स्थास्यति ।।११६।।**

कान्तां प्रति कान्तवाक्येन तमुदाहरति। हे कृशोदरि! असौ मानरूपो व्याधि स्त्वच्चेतसि कथं स्थास्यति यत एतेसिद्धरसास्सन्तीति शेषः तानाह। कुमुदेश्वरश्चन्द्र आयातः सर्वेश्वरो मारुतो विजयते भैरवोभृङ्गः स्फूर्जति गुञ्जति। प्राणेश्वरो वल्लभो निकटं समीपं न मुञ्चति अनवद्योरमणीय उत्सवोहर्षोयस्मात्सः प्रसून विशिखः कामोवैद्यः एवं च सौषधिभिषजा व्याधिर्विधूयनीरोगो यथा विधीयते तथा चन्द्रादीनामालम्बनोद्दीपनविभावत्वाद्रतिसमुदायात्तत्प्रतिबन्धी क्रोधाभाव इति भावः। एवं कथनेन कामसिद्धान्तवेत्तृत्वमावेद्यते ।।११६।।

**सन्धानचतुरश्चेटको यथा–**

**सा चन्द्रसुन्दरमुखी स च नन्दसूनु-**
**र्दैवान्निकुञ्जभवने समुपाजगाम।**
**अत्रान्तरे सहचरस्तरणौ कठोरे**
**पानीयपानकपटेन स संप्रतस्थे ।।११७।।**

कामिनोः सन्धाने निपुण इत्यर्थः। सहचरो वयस्यः कठोरे मध्याह्ने तरणौ सूर्य्ये रतियोग्ये समय इति ज्ञात्वा जलव्याजेन गते इति चतुरत्वम् ।।११७।।

**अङ्गादिवैकृत्यैर्हास्यकारी विदूषको यथा–**

**आनीय नीरजमुखीं शयनोपकण्ठ-**

मुत्कण्ठितोऽस्मि कुचकञ्चुकमोचनाय।
अत्रान्तरे मुहुरकारि विदूषकेण
प्रातस्तनस्तरुणकुक्कुटकण्ठनादः ॥११८॥

कश्चित्प्रति नायकवाक्येन तमाह-नीरजमुखीं शयनस्योपकण्ठं समीपमानीय कञ्चुकमोचनाय उत्कण्ठितोऽस्मि। अत्रान्तरे विदूषकेण प्रातस्तन उषो जातः। तरुण कुक्कुटस्येव कण्ठनादो मुहुराभीक्ष्ण्यमकारि तरुणेनोच्चोच्चारितत्त्वमाभीक्ष्ण्येनावश्य श्राव्यत्यत्वंतेनेह विदूषकत्वं स्फुटम् ॥११८॥

स्वेदः कम्पोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः। वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः गुणाः यथा–

भेदो वाचि, दृशोर्जलं कुचतटे स्वेदः, प्रकम्पोऽधरे
पाण्डुर्गण्डतटी, वपुः पुलकितं, लीनं मनस्तिष्ठति।
आलस्यं नयनश्रियश्चरणयोः स्तम्भः समुज्जृम्भते
तत्किं 'राजपथे' कृशोदरि! दृशोर्जातोऽतिथिः केशवः ॥११९॥

नायिकां प्रति सखी वाक्येन स्वेदादीनुदाहरति। हे कृशोदरि! तत्कारणात् राजपथे दृशोः केशवोऽतिथिर्गोचरो जातः किं यतो वाचि वचने भेदः इह स्वरभङ्गः दृशोर्जलइहाश्रुपूरः कुचतटे स्वेदः अधरे प्रकम्पः पुनर्गण्डतटी पाण्डुः इह वैवर्ण्यं पुनर्वपुः पुलकितं इह रोमाञ्चः पुनर्मनोलीनं वाह्यज्ञानशून्यं तिष्ठति इति सर्वत्र। इह प्रलयः पुनर्नयनश्रिय आलस्यम्, इह स्तम्भश्चरणयोः स्तम्भः उभयत्रापि। तथा च नायकदर्शनजन्या एवैते सात्त्विकागुणा उत्पन्ना इत्यनुमानेन दृग्गोचरीभूतः कृष्ण इति भावः ॥११९॥

रति स्थायिभावाः

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः।

शृङ्गारश्च द्विधा–

सम्भोगो विप्रलम्भश्च

आद्यो यथा–

वियति विलोडति जलदः
स्खलति विधुः कूजति च कपोतः

निपतति ताराततति

रान्दोलति वीचिरमरवाहिन्याः ॥१२०॥

शृङ्गाराधारं निरूप्य तस्य व्यवस्थितिं निरूपयति। रतीति। इयं ममेत्याद्याकारज्ञानरूपा प्रीतिरित्यर्थः। तं विभजते सम्भोग इत्यादि। विप्रलम्भान्यत्वेसति प्रकृतत्वमाद्यम्। संगप्रत्याशाकालिकत्वेसति स्वाधीन संगमाभावविशिष्टरतिप्रकृतित्वमन्त्यम्। सत्यन्तेन यूनोरन्यतरस्मिन्मृते न विप्रलम्भः स्वाधीनैकदेशस्थयोरपि गुरुलज्जादितो रतिप्रतिबन्धेन विप्रलम्भ एव। विदेशस्थयोरपि दूतीप्रेरणादौ सम्भोग एवेत्याहुः। जलदः केशपाशः वियत्यन्तरिक्षे विलोडति अवगाहते विधुर्मुखं स्खलति चुम्बनौत्सुक्यात्, यद्वा वियतिमध्ये श्रमाधिक्यादन्यत्रयोज्यमानमुखं अन्यत्रयुनक्ति इत्यर्थः। यद्वा विधुश्चन्द्राख्यमाभरणं स्खलति। कपोतकण्ठः कूजति शब्दायते नूपुरादिर्वा। ताराततिः केशस्थ पुष्पावलिः श्रमजलं जालं वा अमरवाहिन्या शुभ्रं जलमेव गङ्गायावारि मुक्ताहार आन्दोलति उच्छलति इहैवं विधिः विपरीतरतिसमयएवेति सम्भोगः ॥१२०॥

**अन्त्योयथा–**

**प्रादुर्भूते नवजलधरे त्वत्पदं द्रष्टुकामाः**

**प्राणाःपङ्केरुहदलदृशः कण्ठदेशं प्रयान्ति।**

**अन्यत् किं वा तव मुखविधुं द्रष्टुमुड्डीय गन्तुं**

**वक्षः पक्षं सृजति बिसिनीपल्लवस्यच्छलेन ॥१२१॥**

दूतीषु रुषं न वेदयतीत्याह। नवजलधरे प्रादुर्भूते प्रकटीभूते सति पङ्केरुहदलंदृशः कान्तायास्त्वत्पदं द्रष्टुकामाः प्राणाः कण्ठदेशं प्रयान्ति। अन्यत् किं वा तव मुखमेव विधुं द्रष्टुम् उड्डीय गन्तुं तस्यावक्षः विसिनी कमलिनी पल्लवस्य च्छलेन पक्षं सृजति चकोर इव भवतीत्यर्थः त्वद्वियोगज्वरजन्यतापापनोदायेति भावः। तेन सङ्गमेच्छा ॥१२१॥

**विप्रलम्भे चाभिलाष-चिन्ता-स्मृति-गुणकीर्तनोद्वेग-विलापोन्माद-व्याधि-जडता-निधनानि-दशावस्था भवन्ति।**

**तत्र सङ्गमेच्छाऽभिलाषः।**

**यथा–**

**तस्यां सुतनु सरस्यां चेतो नयनद्वयं च निष्पतितम्।**

**चेतोऽथगुरु निमग्नं लघुनयनं सर्वतो भ्रमति ॥१२२॥**

तस्यां सुतनुरूपायां सरस्यां सरसि चेतोनयनद्वयं च नितरां निपतितं चेतस्तु निमग्नं तत्र हेतुर्गुरु यतः सर्वेन्द्रियश्रेष्ठत्वात् एवं तु चेतस्तस्यामेव विलीनमिति भावः। नयनन्तु सर्वतो भ्रमति निमग्नाभावे हेतुर्लघुयतस्तैजसत्वात् नयनमपि तामेवावलोकयितुमितस्ततः प्रसरति नयनेन विहितेऽपि मनस्सावधानमेव लग्नमिति सङ्गमेच्छा ।।१२२।।

**सन्दर्शनसन्तोषयोः प्रकारजिज्ञासा चिन्ता यथा–**

**मया विधेयो मुहुरद्य तस्मिन् कुञ्जोपकण्ठे कलकण्ठनादः।**
**राधा मधोर्विभ्रममावहन्ती कुर्वीत नेत्रोत्पलतोरणानि ।।१२३।।**

कृष्णोदूतीमुपशिक्षयतीत्याह–मयेत्यर्द्धसुबोधम् राधानेत्रोत्पलान्येव तोरणानि कुर्वीत तोरणहेतुः मधोर्वसन्तस्य विभ्रमं सभूषणं विलासमावहन्ती। इह विभ्रमत्वेन सन्तोषस्तोरणत्वेन दर्शनं क्रियया तयोर्जिज्ञासा ।।१२३।।

**प्रियाश्रितचेष्टाद्युद्बोधितसंस्कारजन्यं ज्ञानं स्मृतिः। यथा–**

**रामो लक्ष्मणदीर्घदुःखचकितो नाविष्करोति व्यथां**
**श्वासं नोष्णतरं जहाति सलिलं धत्ते न वा चक्षुषि**
**वातावर्तविवर्तमानदहनक्रूरैरनङ्गज्वरैः**
**क्षामः किन्तु विदेहराजतनुजां भूयः स्मरन् वर्तते ।।१२४।।**

शत्रुशक्तिसन्धितलक्ष्मणे रामदशामन्योन्यमाहेत्याह–लक्ष्मणस्य दीर्घं दुःखं तेन चकितो रामो व्यथां नाविष्करोत्येवमग्रे। किन्तु वातावर्तो वात्या तेन विवर्त्तमानो वर्द्धमानोयोदहनोऽग्निस्तद्वत्क्रूरैर्दाहकैरनङ्गज्वरैः क्षामः कृशःसन् विदेह राजतनुजां सीतां भूयो वारं वारं स्मरन्वर्त्तते न तु चेष्टादिकं करोति स्वदुःखाविष्करणे लक्ष्मणस्यातिदुःखं भविष्यतीति तद्गोपयन्सीतास्मृतिजन्यतापव्याकुल एवास्ते इत्यभिप्रायः इह स्मरणम् ।।१२४।।

**विरहकालीनकान्ताविषयकप्रशंसाप्रतिपादनं गुणकीर्तनम् यथा–**

**स्पर्शः कुचतटस्पर्शी वीक्षणं वक्त्रवीक्षणम्।**
**तस्याः केलिकलालापः समयः समयः सखे ।।१२५।।**

कान्तो मित्रं प्रत्याहेत्याह। हे सखे! मम स्पर्शस्तस्याः कुचस्पर्शः तटेबीक्षणं नेत्रव्यापारः तस्याः वक्त्रवीक्षणं समयः कालोऽपितस्याः केलिकलालापसमय एव। इह स्पर्शादिनातिसुखजनकत्त्वादितरस्पर्शतोऽधिक्याच्च गुणकथनं व्यज्यते ।।१२५।।

कामक्लेशजनितसकलविषयकहेयताज्ञानमुद्वेगः

यथा–

गरलद्रुमकन्दमिन्दुबिम्बं करुणावारिजवारितो वसन्तः।
रजनीस्मरभूपतेः कृपाणी करणीयं किमतः परं विधातः ॥१२६॥

तत्त्वज्ञानजन्यस्य तत्र वारणाय कामक्लेशेत्यादिः कान्ताविरहितो विधिमुद्दिश्य कश्चित् पश्चात्तपतीत्याह–हे विधातअतः पर किं करणीयम्। कामजन्य ज्वरजीर्णार्थममृतशीतलादिकं तदपि तापदमेवेत्यर्थः तथाचेन्दुविम्बादि हेयमेवेति उद्वेगः। गरलं विषं तद्द्रुमस्पर्शमूलमिन्दुविम्बं करुणा दया तद्रूपितद्वारिजं कमलं तापहरं तेन वारितो वसन्तः। स्मरभूपतेः रजनी रात्रिः कृपाणो खड्गः एवेन्दु वसन्तयोरसर्वकालिकत्वेन सह्यत्वेऽपि सर्वदान्तरायभूता रात्रिः कान्तामन्तरेण दुस्सहैवेति भावः। सा विधिना न कर्त्तव्येति प्रार्थनीयं विधिपदम् ॥१२६॥

प्रियाश्रितकाल्पनिको व्यवहारः प्रलापः कल्पनायां कारणमन्तःकरणविक्षेपः तस्य च निदानमुत्कण्ठा यथा–

अधिसंवीक्षणं चक्षुरधिसम्मीलितं मनः।
अधिसंस्पर्शनं पाणिरद्य मे किं करिष्यति ॥१२७॥

अधीति। तदन्यविषयकनयनादिव्यापाराणां तद्विरहे केनोपायेन निर्वाहो भविष्यतीति भाव इत्युत्कण्ठा ॥१२७॥

औत्सुक्यसन्तापादिकारितमनोविपर्यासससमुत्थप्रियाश्रितवृथाव्यापार उन्मादः। व्यापारः कायिकोवाचिकश्च आद्यो यथा–

प्रतिफलममृतांशोर्वीक्ष्य कान्तो मृगाक्ष्या
मुखमिति परिहारं कर्तुमभ्युद्यतोऽभूत्।
अथ शिथिलितवाचो मानमाशङ्क्य तस्याः
स्पृशति पुलकिपाणिं पाणिपङ्केरुहेण ॥१२८॥

औत्सुक्यं समयासहिष्णुत्वं विपर्य्यासः व्याकुलता प्रतिफलमिति प्रतिबिम्बं स्पृशति, अनुनयार्थमिति भावः। इति स्पर्शः कायिकः ॥१२८॥

अन्त्यो यथा–

किं रे विधो! मृगदृशो मुखमद्वितीयं
कन्दर्प! दृप्यसि दृगम्बुजमन्यदेव

झङ्कारमावहसि भृङ्ग। तनुर्न तादृक्

कर्माणि धिक् क्व पुनरीदृशमीक्षणीयम् ॥१२९॥

किं रे विधो रे इति नीचत्वं व्यञ्जयति तच्चप्रियाननसाम्येर्ष्यायाः। किं दृप्यसि अहं तत्सम इति किं गर्वयसे। यतोमृगदृशोमुखमद्वितीयं उपमानोपमेयरहितम्–हे कन्दर्प! त्वं किं दृप्यसि मदायुधसमूहमपीति तव किमर्थो दर्प्पः यतस्तद्दृगम्बुजमन्यदेव त्वदायुधकुसुमेभ्योऽन्यदेवातो न तवापि गर्व उचित इति भावः। हे भृङ्ग! त्वं किं झंकारं साहंकारम् आवहसि गर्वादिति भावः। इदमप्यनुचितं यतस्तवशब्दसाम्येऽपि तादृशी तनुर्नास्ति कर्मणि धिक्। यानि ईदृश नायिकादर्शनप्रतिबन्धकानि तदेवाह क्व पुनरीदृशमीक्षणीयम्, इहैवं कथनेन वाचिकः॥१२९॥

मदनवेदनासमुत्थसन्तापकार्श्यादिदोषो व्याधिः

यथा–

कोदण्डं विशिखो मनोनिवसतिः कामस्य तस्या अपि

भ्रूवल्ली नयनाञ्चलं मनसि ते वासः समुन्मीलति

इत्थं साम्यविधौ तयोः प्रभवति स्वामिन्तथा स्निह्यतां

तन्वानां तनुतां क्रमादतनुतां नैषा यथा गच्छति ॥१३०॥

रोगादिजन्यकार्श्यादि वारणाय मदनेत्यादि–यथा कामस्य कोदण्डं धनुर्विशिखा बाणा मनसि निवसतिर्गृहमस्ति तथा तस्या अपि कोदण्डस्थानीया भ्रूवल्ली विशिखस्थाने नयनाञ्चलं ते तव मनसि वासश्चास्ति। इत्थं प्रकारेण कामकामिन्योः साम्यविधौ प्रभवति सति यथा सा नायिका तनुतां तन्वानां दधाना अतनुतां अनङ्गतामशरीरं न गच्छति तथा स्निह्यतां प्रीयतां स्वसाम्यमसहमानो मदनस्तत्प्राणहरोद्यममपि करिष्यति। किञ्चैकएव मदनो विरहि प्राणदमने समर्थः। अथ तस्यास्तद्रूपत्वे तत्साहाय्य सम्भृतो मदनः किं किं न करिष्यतीति। स्वामिन्नित्यनेन प्रार्थनौचित्यञ्चेति ध्वन्यते। इह तनुतामित्यादि नाकार्श्यादिदोषः ॥१३०॥

विरहव्यथामात्रवेद्यजीवनावस्थानं जडता।

यथा–

पाणिर्नीरवकङ्कणः स्तनतटी निष्कम्पमानांशुका

दृष्टिर्निश्चलतारका समभवन्निस्ताण्डवं कुण्डलम्

कश्चित्रार्पितया समं कृशतनोर्भेदो भवेन्नो यदि
त्वन्नामश्रवणेन कोऽपि पुलकारम्भः समुज्जृम्भते ॥१३१॥

पाणिरिति पूर्वार्द्धं सुबोधम्। इत्थं कृशतनोर्नायिकाया श्चित्रेर्पिता या पुत्तलिका तया को भेदो भवेत्, उभयत्र जाड्येन साम्यादिति भावः। यदित्वन्नामस्मरणेन कोऽपि पुलकारम्भः नो समुज्जृम्भते उदीते एवञ्च चित्रसाम्येन जाड्येऽपि कान्तनामस्मृतिजन्य सात्त्विकभावरोमाञ्चोद्गममात्रेण जीवनमावेद्यते ॥१३१॥

स्वप्नचित्रसाक्ष्याद्भेदेन दर्शनं त्रिधा–

आद्यं यथा–

मुक्ताहारं न च कुचगिरेः कङ्कणं नैव हस्तात्
कर्णात् स्वर्णाभरणमपि वा नीतवान्नैव तावत्।
अद्य स्वप्ने बकुलमुकुलं भूषणं सन्दधानः
कोऽयं चौरो हृदयमहरत्तन्वि तन्न प्रतीमः ॥१३२॥

सखीं प्रति नायिका वाक्येन तमुदाहरति। कुचगिरेर्मुक्ताहारं न नीतवान् हस्तात् कंकणं नैव नायिका कर्णात्स्वर्णाभरणं तावत्, किन्तु अद्य स्वप्ने वकुलमुकुलं भूषणं दधानः कोऽयं चौरो हृदयमहरदचूचुरत् तन्न प्रतीमो जानीमः। इह गिरित्वादिना चौर्य्यसुलभत्वेऽपि मुक्तादेर्बहुमूल्यत्वाद् ग्राह्यत्वेऽपि तत्त्यागात्केवलहृदयादृश्यापहारी कोऽयं विलक्षणश्चोराभास इति दृष्टोऽपि विवेकेन स्वप्नान्न जानीम इति स्वप्नदर्शनम् ॥१३२॥

चित्रदर्शनं यथा–

नीवीं हरेदुरसिजं विलिखेन्नखेन
दन्तच्छदञ्च दशनेन दशेदकस्मात्।
इत्थं पटे विलिखितं च विलोक्य चित्रं
बाला पुरेव न जहार विहारशङ्काम् ॥१३३॥

नीवीं हरेद्विमोचयेत् उरसिजं कुचं नखेन विलिखेत् सव्रणंकुर्य्यात्। दन्तच्छदमधरं दशनेन दंशेत् दंष्ट्राव्यापारायतं कुर्य्यात्। इत्थं पटे विलिखितं चित्रं विलोक्य बालापुरेव यथा पूर्वं नायकसंभोगे विहारक्रीडा तस्य शङ्का भयं न जहार बालात्वेन भ्रमयोग्यता इदं च समर्थानां सुखजनकमेवेत्यर्थः ॥१३३॥

साक्षाद्दर्शनं यथा–

चेतश्चञ्चलतां त्यज, प्रियसखि व्रीडे! न मां पीडय,
भ्रातर्मुञ्च दृशौ निमेष! भगवन् काम! क्षणं क्षम्यताम्।
बर्हं मूर्धनि कर्णयोः कुवलयं वंशीं दधानः करे
सोऽयं लोचनगोचरो भवतु मे दामोदरः सुन्दरः ॥१३४॥

विवक्षितग्रन्थान्तराधिकवाक्येन स्ववाक्येन वा मङ्गलमाविष्कुर्वन्नुदाहरति। हे प्रिय चेतश्चञ्चलतां व्याकुलतां विषयान्तरेच्छामितियावत् त्यज। हे सखि व्रीडे! मां स्वामिदर्शनोद्धुरां न पीडय हावभावादिकरणे प्रतिबन्धिका मा भवेत्यर्थः। हे भ्रातर्निमेषदृशौ मुञ्च दर्शनेऽन्तरायो माभूरित्यर्थः। हे भगवन् काम! क्षणं क्षम्यताम्। मनोवधारणार्थमिति भावः। वर्हं मयूरपिच्छं मूर्द्धनि, कर्णयोः कुवलयं कमलं, करे वंशं वेणु दधानः सोऽयं प्रसिद्धविभवः सुन्दरो दामोदरो मल्लोचनगोचरो भवति। चेत इत्यादिना दुर्ज्ञेयत्वबोधितेऽपि बर्हमित्यादिना भक्तवात्सल्येनैवंरूपः। हृदविषयोऽपि नेत्रविषयो भवति महति भाग्योदये। भवन्तो बाधका मा भूवन् इति भावः। इहाविषयस्यापि विषयभवनेन साक्षाद्दर्शनं स्फुटम् ॥१३४॥

माध्वीकस्यन्दसन्दोहसुन्दरीं रसमञ्जरीम्।
कुर्वन्तु कवयः कर्णभूषणं कृपया मम ॥१३५॥

इदानीं स्वगर्वपरिहारपूर्वकस्वजनकाद्याख्यातिपूर्वककृतग्रन्थश्रद्धाविषयतां जिज्ञासून्प्रत्याह माध्वीकेत्यादि। मधुस्यन्दसन्दोहः रसप्रस्रवसारसंग्रहः तेन सुन्दरी तद्वतीवासौ सुन्दरीति वा ॥१३५॥

तातो यस्य गणेश्वरः कविकुलालङ्कारचूडामणि-
र्देशो यस्य विदेहभूः सुरसरित्कल्लोलकिर्मीरिता ।
पद्येन स्वकृतेन तेन कविना श्रीभानुना योजिता
वाग्देवी श्रुतिपारिजातकुसुमस्पर्धाकरी मञ्जरी ॥१३८॥

विदेभूमिर्मिथिलाभूमिः गङ्गालहरी एव लोला उर्मिकादिभूषणं यस्याः कीर्निनितेति पाठे तथा चित्रिता पद्येनैकत्वमविवक्षितम्। यद्वा तदो बुद्धिविषयार्थकत्वादनुद्भूतावयवभेदत्वेनैकत्वान्न दोषः वाग्देवीति यथा पारिजातः लब्धव्यमिष्टं ददाति तथेदं पठनात् सभ्यत्वाद्युदयेन सकलं ददाति इति भावः। तथा चेष्टं जिज्ञासुरेतत् पठने सर्वथा पततीयमिति शिवम् ॥१३५॥

इतिश्रीमहामहोपाध्यायश्रीमन्मिश्रभानुदत्तविरचिता रसमञ्जरी समाप्ता।

आसीद्व्यासीकृताशीविषविषयनृपः श्रीन्द्रदत्तोमहेन्द्रै-
र्गण्यापुण्यातिधन्या धरणिररणिभिर्वन्यतेवह्निरह्नि।
श्रौतैर्घौतैर्नसस्तेविगतकुजरजोराजयोयत्रभूमी
देवास्सेवातिदेवाः मुषितसुरसुखेमामषोरीतिनाम्नि ॥१॥
गर्गवंशावतंसेन तेनाकारिशिशूत्सवात्
अकृद्धि बुद्ध्यापन्नं यं शोधयन्तु महाधियः ॥२॥
त्रयोविंश समश्चाङ्कपक्षहस्तीन्दुसम्मिते।
वत्सरे कोशलाशालीयस्तेनातान्ययं महः ॥३॥

इतिश्रीमदुपाध्यायमोहनलालस्तस्य पुत्रः
श्रीमदुपाध्यायलालमणिस्तस्य सुनूना
श्रीन्द्रदत्तेन कृतो रसमञ्जरीव्याख्याग्रन्थः समाप्तिमगात्।

श्रीकृष्णाय नमः। संवत् १८९१।